# उदयमाना तारा

यदि भवताम् परिचये कुटुम्बे परिसरे कोऽपि बाल्ये एव प्राप्तयशा: बाल: अस्ति चेत् कृपया तस्य/तस्या: विवरणं स्वसन्दर्भं दत्त्वा अस्मान् प्रति प्रेष्यताम्।

Young Achievers-RCM,
Chandamama India Ltd,
No:2 Swati Enclave,
Door No 5 & 6,
Amman koil street,
Vadapalani,
chennai-26.
(or)
online@chandamama.com

## युवा लक्ष्यवेधी

दशवर्षीय: गोवानगरनिवासी यश: राञ्ची इत्यत्र राष्ट्रीयक्रीडासु १०m Air rifle प्रतियोगितायां भागं गृहीतवान्। तस्य पिता योगेश्वर: पडलोस्कर: अपि Ace shooter इति विख्यात:। स: स्वयं 'इन्दोर' इत्यत्र जातायां अखिल-भारतीयप्रतियोगितायां रजतपदं प्राप्तवान्। स: स्वस्य पुत्रम् अपि लक्ष्यवेधनार्थं प्रोत्साहितवान्।

अत: वयस: केवलं ७/½ वर्षे यश: लक्ष्यवेधनस्य प्रशिक्षणम् आरब्धवान्। सरस्वती विद्यालयस्य छात्र: अयं वयस्यगणे अतीव प्रिय:। शालाप्रशासनस्यापि महत्प्रोत्साहनं वर्तते तस्य क्रीडायाम्।

'युवराज साळुखे' तथा 'एम्. एस्. भांगले' इति तस्य प्रशिक्षकद्वयम्। यदा स: १०m Air Rifle प्रतियोगितायां ५६२/६०० गुणान् प्राप्तवान् तदा उभावपि अतीव आनन्दितौ।

राज्यस्तरे साधुरीत्या सादरीकरणानन्तरं यश: गोवाराज्यस्य गणं प्रविष्टवान्।

यशस्य पिता गोवा इत्यत्र लक्ष्यवेधनस्य प्रशिक्षणकेंद्रम् आरब्धवान्। तेन बहव: उदयमाना: लक्ष्यवेक्षका: स्वग्राम एव अध्ययनं कर्तुं शक्नुयु:।



'गगन नारङ्ग' इति विखात: लक्ष्यवेधक: तस्य प्रिय:। स्वस्य आदर्शम् अनुकुर्वन् अग्रे तस्य इव नैपुण्यं प्राप्तुम् इच्छति यश:।



सितम्बर २०११ ₹20/-
*Founded by* B. Nagi Reddi and Chakrapani

**Editor & Publisher :**
Prashant Sharad Mulekar

**Associate Editors :**
R. Vaasugi, K. Raja Sekhara Raju

**Sub Editor :**
Patricia Pandian

**Content Head - Online :**
Sowmya Bharadwaj

**Senior Artists:**
K.C. Sivasankaran (Sankar), Gandhi Ayya, P. Mahesh, Sandeep Solkar

**Artist :**
Venki

**Layout Designers :**
B. Thirumal, K. Narendra, N. Sivakumar

**Production In-charge :**
Prashant Pawar

**Circulation:**
circulation@chandamama.com

**Asst. Manager - Sales & Circulation:**
Subhankar Rej

**Sales Officer - Circulation :**
K. Ravishankar

**Advertisement :**
sales@chandamama.com

**Subscription :**
Subscription@chandamama.com
Ramya K (Chennai)
Ph: +91 44 4399 2828

**Head Office :**
**CHANDAMAMA INDIA LTD.,**
P.O.Box No:19407, Mumbai-400093
Phone +91 22 28312872 / 28311849
Email:chandamama@chandamama.com
Website : www.chandamama.com

Published, Printed and Owned by CHANDAMAMA INDIA LTD., Published and Printed on their behalf by Prashant Sharad Muleker
Published at B-3, Cross Road 'B', MIDC, Andheri (East) Mumbai - 400093.
Printed At :- Kala Jyothi Process Pvt. Ltd, S.No.185, Kondapur, R.R.District-500133, Andhra Pradesh.
Editor :- Prashant Sharad Mulekar

S

# अन्तरङ्गम्

## चन्दमामा

Volume-2 September 2011 Issue-09


* वाचकानां पुटोऽयम् ...०६
* कुरूपं दर्शनम् ...०७
* मत्स्मृतय: - १ ...०९
* मत्स्मृतय: - २ ...१०
* वचनानुसारी राजा ...११
* आत्मसम्मान: ...१८
* कटुः मधुरायते ...१९
* पराजित: पण: ...२१
* मित्रभेद: - २२ ...२५
* सत्यप्रियता ...२८
* परीक्षा ...३१
* अलसः गर्दभः ...३३
* रघुवंश: ...३५
* लघुबालिका पाठं पाठयति ...३९
* कावेर्या: उत्पत्ति: ...४२
* दानशीलस्य स्वप्न: ...४४
* विस्मरणशील: मनुष्य: ...४८
* हरितगणेश: ...५१
* चातुर्यम् ...५४
* शिथिलालय: - १८ ...५५
* स्वातन्त्र्यकलिका ...६३
* शेखफरीद: ...६७
* कोऽहं भविष्यामि ? ...७१
* चन्दमामीया सामान्यज्ञानपरीक्षा - ३२ ...७२
* हस्यताम् उदरोपपीडम् ...७३
* राजखाद्यम् ...७४
* वर्ध्यताम् शब्दसम्पत्ति: ...७६
* भारतदर्शनम् ...७८
* मुखपृष्ठ-कथा ...७९
* वीरबल: ...८०
* चित्रमञ्जूषा ...८२



# वाचकानां पुटोऽयम्



**अ**धुना चन्दमामा मुखपृष्ठ-कथावैशिष्ट्यसहितं पूर्वतनपद्धत्या प्रकाश्यमाना अस्ति। कृपया पुरातनेन सह नूतनाविष्कारान् अपि प्रकाशयतु। ***- कोलार-कृष्ण अय्यर, बंगलोर***

**स**म्पादकीये भवता लिखितं यद् चन्दमामायां प्रकाश्यमानं साहित्यं नवीकर्तुम् इच्छन्ति भवन्त:। व्यवस्थापनदृष्ट्या तथा लिखितम् इति मन्ये। सूचनानुसारं मत्सदृशै: वाचकै: प्रतिक्रिया: अपि प्रेषिता:। तासु कासाञ्चन विचारं कृत्वा तदनु परिवर्तनम् अपि कृतम् इति दृश्यते। साम्प्रतं चन्दमामायां प्रकाश्यमानानि अन्तिमानि १०-१२ पृष्ठानि वयं द्रष्टुमपि नेच्छाम:।

***- डी.एस्.शङ्कर वक्कलङ्का, आन्ध्रप्रदेश:***

**ग**तेषु चतुर्षु दशकेषु अहं चन्दमामाया: निष्ठावान् वाचक:। चन्दमामायां प्रकाशिता: कथामालिका: कृपया पुस्तकरूपेण प्रकाशयतु। कन्नडभाषायां प्रकाशितम् 'अवलि-मक्कल-काठे' इति पुस्तकं विहाय नान्यत् किमपि प्रकाशितं भवता। सद्य: अपि पुस्तकद्वयस्य प्रकाशनं कृतं। अत: प्रति षण्मासम् एकं नूतनं मालिकापुस्तकं प्रकाशयतु जनानां मोदाय इति अहं प्रार्थये। गतपञ्चाशत् वर्षेभ्य: अहं चद्रमामा-ग्राहक: अस्मि। ***- भारत, बंगलोर***

**ग**तेभ्य: केभ्यश्चित् मासेभ्य: चन्दमामायां प्रकाशितानां पर्यावरण-विषयक-कथानां (GO GREEN) परिशीलनं कुर्वन्नस्मि। आधुनिक-पद्धत्या लिखिता: एता: कथा परन्तु कथाविषय: तु बालानां समाजस्य कृते अपि उपयुक्त:। लेखकेभ्य: शुभासंशनम्।

***- एम्. मुरलीमोहन, अंबाला, हरियाणा***

**अ**स्मिन् मासे नियोजितकालात् पूर्वम् एव चन्दमामां प्राप्य अहम् अतीव चकित: आनन्दित: च। कथाचयनम् अपि अतीव साधु आसीत्। परन्तु कासुचित् कथासु संवादे प्रादेशिकप्रभाव: वर्तते। अत: कृपया प्रमाणितभाषाया: एव उपयोगं करोतु।

***- एम्. व्ही.व्ही सत्यनारायण, विशाखापट्टणम्***

**अ**स्य मासस्य चन्दमामा अतीव रमणीया। अहं बाल्याद् आरभ्य चन्दमामां पठामि। मे २०११ संचिकायां प्रकाशितं 'Go Green magic' मह्यम् अतीव अरोचत। यदि भवन्तं पुन: तद् प्रकाशयन्ति तर्हि अहम् अनुगृहित: भवामि। ***- शैलेशकुमार बेहेरा, देवला साही, कटक***

**च**न्दमामाया: अधुनातनसंचिका: अहम् अवधानेन आनन्देन च पठामि। (विशेषत: बंगाली भाषायां।) यथा केचन नूतना: उपक्रमा: आरब्धा: तथैव केचन पुरातना: निष्कासिता: वर्तन्ते; यथा चित्रशीर्षिका स्पर्धा। पुनरपि तां स्पार्धाम् आयोजयितु इति मे प्रार्थना।

***- सन्तोषकुमार रॉय, पुतीयारी(प), कोलकाता ७०००४१***

# गणपतिबाप्पा मोरया!

विघ्नहर्ता, बुद्धिप्रदाता गजानन: अस्माकं प्रियं दैवतम् 'गणेशचतुर्थी' इति तिथौ तस्य जन्मोत्सव: भवति। १ सप्टेंबरत: अस्मिन् वर्षे गणेशोत्सवस्य आरम्भ:। सत्यवाहनराजस्य, चालुक्यानां राज्यशासनकालादारभ्य अयम् उत्सव: सम्पद्यते। महाराष्ट्रे छत्रपतिशिवरायस्य काले, पेशवेशासनकाले च अनेन उत्सवेन शासनाश्रय: लब्ध:। ब्रिटिशशासनकाले लोकमान्यतिलकमहोदयानां प्रेरणया अयम् उत्सव: सार्वजनिक: सञ्जात:।

अस्मिन् मासे 'जागतिक-पर्यटनदिनमपि आचर्यते। 'अतिथिदेवो भव' इति अस्माकं संस्कृते: मूलतत्त्वम्। केभ्यश्चित् वर्षेभ्य: तदाचरणे वयं शिथिलताम् अनुभवाम:। पर्यटनार्थम् आगता: परदेशीया: अपि अस्माकम् अतिथय:, अत: भगवद्स्वरूपा:। तै: सह आदरेण एव आचरेम वयम्। अस्माभि: अधिकसहिष्णुतया व्यवहर्तव्यम्। सहिष्णुता नाम दुर्बलता न।

चन्दमामाया: ६४ वर्षपूर्तीनिमित्तम् अस्माभि: जुलै-मासे आन्तरजाले स्वस्य 'ब्लॉग' निर्मित:। तत्र जनानां प्रतिस्पन्द: उत्साहवर्धक:। अस्माकं जालपुटे मोबिसोड्स् तथा श्राव्यकथा: अपि सादरीकृता:। तत्रापि उत्तम: प्रतिस्पन्द: लब्ध:। अस्माकं आबालप्रौढवाचकानां समाधानार्थं यावच्छक्यं नूतनोपक्रमाणाम् आरम्भार्थं वयं प्रयत्नशीला:। कृपया तान् प्रयत्नान् परीक्ष्य तद्विषये भवतां प्रतिक्रिया: अस्मान् प्रति प्रेषयन्तु। - *संपादक:*



# कुरूपं दर्शनम्

कदाचित् रघुनाथः प्रख्यातेन मन्त्रिणा ज्ञानचन्द्रेण सह मेलितुं, तेन सह कतिचन दिनानि यावत् उषित्वा तं सम्यक् परिज्ञातुं सुयोग्यम् अवसरं प्राप्तवान्। ज्ञानचन्द्रः केवलम् अक्ष्णा काणा नासीत् अपि तु तस्य एकः पादः अपि कृत्रिमः आसीत्। तथा च तस्य दर्शनम् अपि न मनोहरम्। अथ कदाचित् एकदा यदा कश्चन क्षौरिकः ज्ञानचन्द्रस्य मुण्डनं कुर्वन् आसीत् तदा ज्ञानचन्द्रः दर्पणे स्वमुखं दृष्टवान्। स्व-रूपं दृष्ट्वा सः रोदितुमेव आरभत। समीपस्थः रघुनाथः अपि स्वाश्रूणि निरोद्धुं नाशक्नोत्। स्वयं ज्ञानचन्द्रस्य रोदने समाप्ते सत्यपि रघुनाथः रोदनं न स्थगितवान्।

''रघुनाथ, मया स्वमुखं दर्पणे दृष्टम्। स्वकुरूपतां ज्ञात्वा अहं रुदितवान्। किन्तु मया दृष्टं यत् त्वं तु मदपेक्षया अधिकं दुःखमनुभूय रोदिषि। किं ते रोदनस्य कारणम्?'' इति पृष्टवान् ज्ञानचन्द्रः।

''मन्त्रिन्, भवता केवलम् एकवारं स्वमुखं दृष्ट्वा एतावत् दुःखम् अनुभूतम्। किन्तु अस्माभिः, भवत्सेवकैः तु भवतः मुखदर्शनं बारंबारं करणीयं भवति। तर्हि चिन्तयतु भवान्, कियत् भवेत् अस्माकं दुःखम्!'' रघुनाथः उदतरत्।

रघुनाथस्य एतेन मार्मिकविनोदेन ज्ञानचन्द्रः न क्रुद्धः प्रत्युत आनन्देन तस्य मुखे हास्यपुष्पाणि विलसितानि। सत्यमेवोच्यते, 'नास्त्यसाध्यं हि धीमतां किञ्चित्'।



**Avail the loyalty bonus!**

**Chandamama Subscribers will get flat 10% off on subscription renewals! (All Editions - within India)**



# Chandamama!

**Because stories make the world go round...**

**Choose your Chandamama!**
**Go to www.chandamamashop.com & subscribe Now!!**



You can also subscribe online at: **www.chandamamashop.com**

**Chandamama is available in English and 12 regional languages.**
**Junior Chandamama for children above 4 years is available only in English.**

I want to subscribe to / gift / renew subscription for the following editions of Chandamama:

- ☐ English ☐ Telugu ☐ Tamil ☐ Kannada ☐ Hindi
- ☐ Marathi ☐ Gujarati ☐ Oriya ☐ Bengali ☐ Sanskrit
- ☐ Santali ☐ Malayalam ☐ Assamese ☐ Junior (Only in English)

Name: ....................................................................

Date of Birth: .............................. Sex : ..............................

Address: ....................................................................

....................................................................

....................................................................

.............................................. City: ..............................

State:.............................. Pin:..............................

Telephone:....................................................................

Mobile:....................................................................

Email:....................................................................

Subscription Number (for renewals):..............................

Gift Subscription to the following address:

....................................................................

....................................................................

....................................................................

....................................................................

Enclosed Cheque/DD* for Rupees..............................

Cheque/DD No ..............................

favouring Chandamama India Ltd on..............................

....................................................................bank.

* Your subscription will commence in 6 weeks.
Please mail the subscription form to:
**Chandamama India Limited,**
P.O.Box No:19407, Mumbai-400093.
Phone +91 22 28312872 / 28311849
Email: subscription@chandamama.com
You can also subscribe online at : www.chandamamashop.com

| Take Your Pick! | 1 YEAR | 2 YEARS | 3 YEARS | 4 YEARS | 5 YEARS |
|---|---|---|---|---|---|
| ENGLISH (Rs. 25/- per copy) | Rs. 300 | Rs. 540 | Rs. 765 | Rs. 960 | Rs. 1125 |
| You Save | | Rs. 60 | Rs. 135 | Rs. 240 | Rs. 375 |
| REGIONAL (Rs. 20/- per copy) | Rs. 240 | Rs. 430 | Rs. 610 | Rs. 770 | Rs. 900 |
| You Save | | Rs. 50 | Rs. 110 | Rs. 190 | Rs. 300 |
| JUNIOR (Rs. 15/- per copy) | Rs. 180 | Rs. 325 | Rs. 460 | Rs. 575 | Rs. 675 |
| You Save | | Rs. 35 | Rs. 80 | Rs. 145 | Rs. 225 |

** conditions apply

**Annual Subscription Overseas :** US $40 for English Chandamama, US $30 for Regional Languages, US $25 for Junior Chandamama (including shipping and handling charges) by air mail.

प्रकाशितः नाभवत् तदा अहम् अन्यैः स्नेहिवाचकैः सह दुःखितोऽभवम्।

सद्यः एव मया ज्ञातं यत् चन्दमामाप्रेमिकाणां कश्चन गणः अस्ति। तत् ज्ञात्वा अतीव आनन्दितोऽहम्। तदा एव मया एतदपि ज्ञातं यत् चन्दामामा पुस्तकस्य प्रथमाङ्कात् आरभ्य सर्वाः प्रतयः केषाञ्चन समीपे वर्तन्ते। तदा अहं तावान् जागरुकः नास्मि अस्य दुःखं जातम्।

यदाहं चन्दमामाप्रेमीगणम् अमिलम् तदा वयं शुभेच्छापूर्वकं चन्दमामा-पुस्तकस्य षष्ठीवर्षाणां कार्यविषये अवदाम। सर्वेषां मतमासीत् यद् यदि रूपद्रौपदी, साहस यात्रालु, ऐदु, प्रश्नालु इत्यादयः मालिकाः पुनः प्रकाशिताः भवेयुः तर्हि कियद् उत्तमम्।

अहं चन्दमामा अद्यापि पठामि इति ज्ञात्वा यदा जनाः चकिताः भवन्ति तदा अहं तान् कोपेन पश्यामि उत्तरामि च "यावज्जीवम् अहं चन्दमामा पठामि भवतां कश्चन आक्षेपः अस्ति वा?"

चन्दमामा शाश्वतं तिष्ठेत् यथापूर्वं तत् सर्वान् ग्राहकान् आनन्देत् इति अहं कामये।

## मत्स्मृतयः - २

**१९७०** वर्षस्य अन्तः आसीत्। अहं शाला-छात्रः आसम्। एकस्मिन् दिने अहं गृहोपयोगीनि वस्तूनि क्रीत्वा प्रत्यागच्छन् आसम्। अकस्मात् एकस्मिन् लघु-आपणे अम्बिलि-अम्मावन पुस्तकं मम दृष्टौ पतितम्। अहं तत् क्रेतुमिच्छामि स्म। परं मम समीपे पर्याप्तं धनं नासीत्। अतः अहं पुस्तकविक्रेतारम् अब्रवम् गृहात् धनं स्वीकृत्य अहमागच्छामि। मत्कृते तत् स्थापयितुम् अहं प्रार्थये । अहं २० निमिषेषु प्रत्यागच्छम्। परं तत्र अम्बिलि-अम्मावन नासीत्। पुस्तकविक्रेता तत् अन्यस्मै विक्रीतवान्।



Name: T.R. Joseph
Place: Ernakulam, Kerala.

अहं मम पितरम् अम्बिलि-अम्मावन-विषये उक्तवान्। सः पुस्तकं क्रेतुं बहिः गतवान्। पेरुम्बवूर नाम ग्रामात्, यत् पञ्च किलोमीटर् दूरे आसीत्, ततः सः पुस्तकमानीतवान्। अहमतीव संतुष्टः जातः। मम प्रिया कथासीत् हनुमान्। अनन्तरम् अहम् अम्बिलि-अम्मावन-पुस्तकस्य वितरकोऽभवम्। अम्बिलि-अम्मावन-पुस्तकस्य परिवाराय मम हार्दाः शुभेच्छाः।

# मत्स्मृतय: - १

मम नाम डोक्का-सोम-शङ्करम्। अहम् पूर्वगोदावरी-जिलाक्षेत्रात् वक्कलङ्का नाम लघुग्रामात् अस्मि। अहं ६५ वर्षीयः। अहं षड्वर्षीयः आसं तदारभ्य चन्दमामां पठामि। तेषु दिनेषु अस्माकं गृहे एकः निवासी पाचकः आसीत्।

यदा मम पितृव्यस्य पुत्राः विरामदिनेषु अस्माकं गृहमागच्छन्ति स्म तदा सः तेभ्यः चन्दमामा-पुस्तकस्य वार्षिकमूल्यनिमित्तं २५ पैसा याचते स्म। (तेषु दिनेषु अङ्कस्य वार्षिकमूल्यं २५-५० पैसा एतावदेवासीत्)। अहं तस्य ग्राहकक्रमाङ्कम् इतोऽपि स्मरामि - टी.सी.एस् ३१६६।



Name: D.Soma Sankaram
Occupation: Cultivation
Place: Vakkalanka, Ambajipeta.

मासस्य द्वितीये अथवा तृतीये दिनाङ्के अहं पत्रालयं (अस्माकं प्रतिवेशिगृहम्) गच्छामि स्म तत्र प्रतीक्षां च करोमि स्म।

पत्रस्यूतः यदा उद्घाट्यते स्म तथा च स्यूतस्य मुखं यदा अधः क्रियते स्म तदा तस्मात् स्यूतात् पतत् चन्दामामा-पुस्तकं दृष्ट्वा अहम् अतीव हृष्टः भवामि स्म। चन्दमामा हस्ते आगते अहं कथामालिकानां पठनं प्रथमं समापयामि स्म। प्रथमं विक्रम-वेताल-सदृशी साहसकथा अनन्तरं पौराणिककथाः।

केचन प्रसङ्गाः एवमासन् यदा मम शिक्षकः मां पृच्छति स्म ''त्वं मह्यं 'विचित्र कवलालु' मालिकां दातुं शक्नोषि वा?'' अहं निग्रहपूर्वकम् उत्तरं वदामि स्म यद् 'अहं दातुं न शक्नोमि। भवता मम गृहमागत्य पठनीयं भवेत्।''

यदा 'कांचु-कोटा' नाम मालिका प्रसिद्धा जाता तदा मया ज्ञातं तस्य लेखकः श्री दसारी-सुब्रह्मण्यं-गुरुः। अहं तस्मै पत्रं लिखितवान्। सः प्रेम्णा उत्तरं लिखितवान्। यदा अस्माकं पत्रव्यवहारः एवं प्रचलति स्म तदा सः मां तस्य मद्रास-कार्यालयमागत्य मेलितुम् आमन्त्रितवान्। अहं सत्वरं गत्वा मिलितवान्। अहं चन्दमामा पुस्तकस्य पुरातनप्रतीः पठितुमिच्छामि स्म। सः मम प्रार्थनामङ्ग्यकरोत्। सः तस्य समीपे एकमासन्दं स्थापयति स्म चन्दमामा-पुस्तकानां सङ्कलनं मत्पुरतः स्थापयति स्म च। अहं सायंकालं यावत् तत्र उपविश्य पठामि स्म। तत्र मध्ये समये अनौपचारिकः कश्चन वार्तालापः काफीपानं च भवति स्म।

केभ्यश्चित् वर्षेभ्यः पूर्वं यदा चन्दामामा दुष्टेन ग्रहणेन पीडितः नाम कानिचन मासानि यावत्

प्रकाशितः नाभवत् तदा अहम् अन्यैः स्नेहिवाचकैः सह दुःखितोऽभवम्।

सद्यः एव मया ज्ञातं यत् चन्दमामाप्रेमिकाणां कश्चन गणः अस्ति। तत् ज्ञात्वा अतीव आनन्दितोऽहम्। तदा एव मया एतदपि ज्ञातं यत् चन्दामामा पुस्तकस्य प्रथमाङ्कात् आरभ्य सर्वाः प्रतयः केषाञ्चन समीपे वर्तन्ते। तदा अहं तावान् जागरूकः नास्मि अस्य दुःखं जातम्।

यदाहं चन्दमामाप्रेमीगणम् अमिलम् तदा वयं शुभेच्छापूर्वकं चन्दमामा-पुस्तकस्य षष्ठीवर्षाणां कार्यविषये अवदाम। सर्वेषां मतमासीत् यद् यदि रूपद्रौपदी, साहस यात्रालु, ऐदु, प्रश्नालु इत्यादयः मालिकाः पुनः प्रकाशिताः भवेयुः तर्हि कियद् उत्तमम्।

अहं चन्दमामा अद्यापि पठामि इति ज्ञात्वा यदा जनाः चकिताः भवन्ति तदा अहं तान् कोपेन पश्यामि उत्तरामि च "यावज्जीवम् अहं चन्दमामा पठामि भवतां कश्चन आक्षेपः अस्ति वा?"

चन्दमामा शाश्वतं तिष्ठेत् यथापूर्वं तत् सर्वान् ग्राहकान् आनन्देत् इति अहं कामये।

## मत्स्मृतयः - २

**१९७०** वर्षस्य अन्तः आसीत्। अहं शाला-छात्रः आसम्। एकस्मिन् दिने अहं गृहोपयोगीनि वस्तूनि क्रीत्वा प्रत्यागच्छन् आसम्। अकस्मात् एकस्मिन् लघु-आपणे अम्बिलि-अम्मावन पुस्तकं मम दृष्टौ पतितम्। अहं तत् क्रेतुमिच्छामि स्म। परं मम समीपे पर्याप्तं धनं नासीत्। अतः अहं पुस्तकविक्रेतारम् अब्रवम् गृहात् धनं स्वीकृत्य अहमागच्छामि। मत्कृते तत् स्थापयितुम् अहं प्रार्थये । अहं २० निमिषेषु प्रत्यागच्छम्। परं तत्र अम्बिलि-अम्मावन नासीत्। पुस्तकविक्रेता तत् अन्यस्मै विक्रीतवान्।


Name: T.R. Joseph
Place: Ernakulam, Kerala.

अहं मम पितरम् अम्बिलि-अम्मावन-विषये उक्तवान्। सः पुस्तकं क्रेतुं बहिः गतवान्। पेरुम्बवूर नाम ग्रामात्, यत् पञ्च किलोमीटर् दूरे आसीत्, ततः सः पुस्तकमानीतवान्। अहमतीव संतुष्टः जातः।

मम प्रिया कथासीत् हनुमान्। अनन्तरम् अहम् अम्बिलि-अम्मावन-पुस्तकस्य वितरकोऽभवम्। अम्बिलि-अम्मावन-पुस्तकस्य परिवाराय मम हार्दाः शुभेच्छाः।



## विक्रमः वेतालः च

# वचनानुसारी राजा

कृतनिश्चयानां शिरोमणिः राजा विक्रमार्कः वृक्षं प्रत्यागत्य शवं ततः अवतार्य स्वस्कन्धे आरोप्य यथापूर्वं निःशब्दतया श्मशानं प्रति प्रातिष्ठत। तावदेव प्रेते वर्तमानः वेताल तम् एवम् अब्रवीत्, ''भो राजन्, किं लक्ष्यं मनसि निधाय त्वया इदम् अशक्यं कार्यम् अङ्गीकृतं स्यात् इत्येतत्तु पौनः पुन्येन चिन्तयाम्यहम्। इयता कष्टेन साध्यं तल्लक्ष्यं सत्यमेव तव लाभाय कल्पेत इति मन्यसे किम्? यतो हि केचन मूढाः महान्ति कष्टानि सोढ्वा कौशलेन सम्पादितं यशः केषाञ्चन अवास्तविकानां परिणामानां भयात् अनुपभुज्यैव परित्यजन्ति कस्यस्विद् विदुषः याज्ञवल्क्यस्य कथां तुभ्यं कथयामि येन एतेभ्यः असीमायासेभ्यः निवृत्तिं प्राप्स्यसि।

अवन्त्याः राजा नयनकान्तः शौर्यण

वचनपालनेन च महतीं कीर्तिम् अवाप्नोत्। न तु केवलं तस्य प्रजाः अपि तु तस्य प्रतिवेशिराजानः अपि तं स्तुवन्ति स्म। 'वचनपरिपालको नृपः' इत्याख्यां सः अगच्छत्।

कदाचित् मृगयार्थं गतस्य नयनकान्तस्य नयनयोः कश्चन सर्पः विषम् अवमत् येन राजा अन्धोऽभूत् दृष्टिं पुनः प्राप्तुं तेन नैकविधाः उपचाराः कारिताः परं केनापि उपायेन इष्टं न सिद्धम्। दृष्टिहीनतया राजा चिन्तागर्ते पतितः इव।

अन्तिमम् उपायं मत्वा 'यः मां पुनरपि द्रष्टुं समर्थं कुर्यात् तस्मै लक्षसुवर्णनाणकानि दीयन्ते' इति सः उदघोषयत्।

तथा याज्ञवल्क्यः नाम कश्चन विद्वान् तं द्रष्टुं समायातः। ''मया बहूनि शास्त्राणि अधीत्य 'नेत्रप्रदानम्' इति काचन पद्धतिः भवतः दृष्टिलाभार्थम् अन्विष्टा वर्तते। नैमिषारण्यं गत्वा तत्र औषधीः अन्विष्टाः मया। महता कष्टेन ताः प्राप्ताः। मासाभ्यन्तरे ताभिः औषधीभिः अहं भवन्तं पुनरपि द्रष्टुं समर्थं करिष्ये। परं पारितोषिकरुपेण भवता लक्षनाणकानि न अपि तु भवद्राज्यस्य अर्धभागः दातव्यः।''

राजा नयनकान्तः चिरं यावत् मनसि समालोच्य अब्रवीत्,''अयि पण्डितवर, न, न मे राज्यार्धमपि मम दृक्शक्तेः अपेक्षया अधिकं महात्म्यम् आवहति। यदि तव प्रयत्नेन पुनरपि द्रष्टुं शक्नोमि चेत् तुभ्यं सनिश्चयं राज्यार्धं प्रदीयते। तथापि तव कार्यार्थम् अत्यधिकं पारितोषिकम् इष्ट्वा असीमधाष्ट्यं प्रदर्शयता त्वया मम दृष्टिप्राप्तौ असत्याम् अत्यधिकाय कठोराय दण्डनाय सिद्धेन भाव्यम्।''

''भो राजन्, सिद्धोऽहं त्वया आज्ञप्तं दण्डमपि सोढुम्'' याज्ञवल्क्यः प्रत्यवदत्।

''तर्हि एषः निश्चयः। यदि त्वं मां द्रष्टुं समर्थं करिष्यसि चेत् राज्यार्धं प्राप्स्यसि, नो चेत् तव शिरच्छेदो विधीयते'' इत्यवदत् नयनकान्तः। याज्ञवल्क्यः तदमन्यत।

याज्ञवल्क्येन करिष्यमाणानाम् उपचाराणां वार्ता राज्ये सर्वत्र प्रसृता। प्रजाः सचिन्तमनसा परिणामान् परीक्षन्ते स्म।

कस्मिंश्चित् सुमुहुर्ते याज्ञवल्क्यः राजानं स्नापयत्। ततः विविधैः तैलैः सः राजसेवकैः राज्ञः शिरोमर्दनम् अकारयत्। तदनन्तरं सः राजानं कश्चन रसम् अपाययत्। अन्ते च सः राज्ञः नयनयोः औषधीलेपनं कृत्वा पट्टिकया नयने अबध्नात्।

अनन्तरं सप्ताहः अतीतः। कदाचित् नयनकान्तः याज्ञवल्क्यं स्वस्थानम् अनयत्। तत्र केचन ग्रामीणाः आगत्य प्रार्थयन्,

''राजराजेश्वर, कश्चन चित्रक: अस्मद्ग्रामं प्रविश्य भक्षयितुं जनान् हन्ति। कृपया भवता स: ग्राह्य: हन्तव्य: च'' इति।

तदा नयनकान्त: याज्ञवल्क्यं तत्समीपमेव आसीनम् अपृच्छत्, ''यदि अहं दृष्टिसामर्थ्यं प्राप्नोमि चेत् त्वं राज्यार्धस्य नृपत्वेन अभिषिक्तो भविष्यसि। तस्मात् अधुना आत्मानं राजानं भावयित्वा अस्या: समस्याया: परिहारं वद।''

''तस्य क: विशेष: देव?'' काश्चन शूरान् सैनिकान् वयं तं प्रति प्रेषयाम:। गुप्तरूपेण चित्रक: तै प्रतीक्षणीय:। तेन आक्रमणे कृते च हन्तव्य: इति योजनां रचयाम:।'' इत्यवदत् याज्ञवल्क्य:। राजा तस्य सूचनां संस्तुत्य काश्चन सैनिकान् ग्रामं प्रेषयित्वा चित्रकम् अघातयत्।

तत्पश्चात् सप्ताहे अतीते यदा राजा पुन: आस्थानम् अगच्छत् तदा केचन धनिका: तेन मेलितुम् आगता:। ते प्रार्थयन्,'' स्वामिन्, कश्चन गौरवभैरवो नाम लुण्ठाक: अस्मद्धनं चोरयति। तस्मात् भीता: वयं निद्रां विनैव रात्री: यापयाम:। कृपया स: भवता गृहीत्वा कारागारे निक्षेप्तव्य:।''

राजा नयनकान्त: याज्ञवल्क्यम् अपृच्छत्, ''अस्यां स्थितौ त्वं किं करिष्यसि?'' याज्ञवल्क्य: प्रत्यवदत्,''देव, वयं काश्चन छद्मलुण्ठाकान् राज्ये सर्वत्र प्रेषयाम:। तत्र चौर्यरता: ते गौरवभैरवस्य ध्यानम् आकर्षेयु:। स: तान् तस्य गणेन सह सम्मेलितुं प्रचोदयेत्। तदा वयम् अस्माकं



साहाय्येन सोत्साहं शत्रून् आक्रम्य पराजेष्यामि। यदि मया शत्रुराज्यं हस्तसात् क्रियते चेत् राज्यार्धस्य स्थाने सर्वमपि विदर्भराज्यं तुभ्यं प्रदास्यामि।''

याज्ञवल्क्योऽवोचत्,''राजन्, त्वया त्वद्वचनं कदापि न विस्मर्यते इति अहं जाने। विजयी भूयाः'' इत्युक्त्वा सः राजनं आशीर्वचोभिः अन्वगृह्णात्।

नयनकान्तः शत्रुसैन्यं धैर्येण सम्मुखीकृतवान्। महद्वीर्यं प्रदर्शयन्तः अवन्तिसैनिकाः शत्रून् आक्रमन्। अवसरं प्राप्य नयनकान्तः शत्रुराजानम् अहन् शत्रुसैन्यं दिशः पलायत। विदर्भराज्यं नयनकान्तेन जितम्।

याज्ञवल्क्याय विदर्भराज्यं पारितोषिकरूपेण दातुम् इच्छन् नयनकान्तः प्रासादं प्रत्यागच्छत्। यदा सः याज्ञवल्क्यम् आह्वातुं कञ्चुकिनं प्रेषितवान् तदा कञ्चुकी याज्ञवल्क्यं तस्य स्थाने अप्राप्य पुनरागम्य,''देव, भवतः विजयवार्तां श्रुत्वा अनुक्षणं विद्वद्वरः इतः निर्गतः'' इति राजानं न्यवेदयत्।

राज्ञा याज्ञवल्क्यम् अन्वेष्टुं पुरुषाः प्रेषिताः। परं सः कुत्रापि न दृष्टः।

इत्थं राज्ञे विक्रमाय कथां श्रावयित्वा बेतालोऽवदत्, ''राजन्, याज्ञवल्क्यः बहून् ग्रन्थान् अधीत्य इष्टाः औषधीः नैमिषारण्ये अन्विष्टवान्। नयनकान्तस्य राज्यार्धं पारितोषिकरूपेण प्राप्तव्यम् इत्येतदेव मनसि



स्पशान् नियोज्य तस्य अग्रिमचौर्यकर्म जानीम: विनायासं च तं गृह्णीम:'' राजा पुनरपि याज्ञवल्क्यम् अस्तौत्।

याज्ञवल्क्यस्य योजनानुगुणं कस्यस्विद् धनिकस्य गृहात् तद् धनं चोरयितुं प्रयतमान: गौरवभैरव: बन्दी कारित:।

अथैकदा राज्ञ: तैलमर्दने रते याज्ञवलक्ये कश्चन गुप्तचर: सन्देशम् अकथयत्, ''अस्मद्राज्यम् आक्रान्तुम् इच्छति।''

नयनकान्त: गुप्तचरं तत: गमनम् आदिश्य याज्ञवलक्यम् अपृच्छत् ''यदि त्वं राजा अभविष्य: चेत् त्वं समस्यामेनां कथं पर्यहरिष्य: ?''

याज्ञवल्क्य: नयनकान्तं द्वयो: राज्ययो: बलाबलम् अपृच्छत्। तत् ज्ञात्वा स: अवदत्,''राजन्, यत: शत्रुबलम् अस्मद् बलस्यापेक्षया द्विगुणितम् अधिकम् अस्मिन् प्रसङ्गे सन्धिरेव कार्य: इति मे मति:।''

तदा नयनकान्तोऽब्रवीत्, ''तथा कृते सति अस्माभि: शत्रवे बलि: दातव्य: भवेत्। तदर्थं प्रजाभ्य: अधिक: कर: स्वीकर्तव्य: भवेत्। तेन प्रजा: कष्टम् अनुभवेयु:। न तु तावदेव अपि तु विजयी शत्रु: अस्मज्जनान् दासान् अपि करिष्यति। तस्मात् युद्धं कृत्वा विजयिना भवितव्यम् अथवा वीरोचितं मरणं वा ऊरीकरणीयम्।''



''एवं सति भवान् युद्धार्थं सिद्ध: किम्? याज्ञवल्क्य अपृच्छत्। ''यदि त्वं मां दृष्टिहीनं पुनरपि, द्रष्टुं समर्थं करोषि चेत् अहं निश्चयेन योद्धुं गमिष्यामि'', नयनकान्त: अवदत्।

'तवोपचारा: श्व: पूर्णतां यान्ति। त्वं नि:संशयं द्रष्टुं शक्नोषि'' याज्ञवलक्य: आत्मविश्वासेन अवदत्।

अन्येद्यु: तैलमर्दनोत्तरं स: राज्ञ: पट्टिका: अमुञ्चत् तं च नेत्रे उद्घाटयितुं प्रार्थयत्।

पट्टिकामोचनानन्तरम् आरम्भे राज्ञा सर्वमपि धूसरम् अस्पष्टं च दृश्यते स्म। परं शनै: शनै: स: सर्वमपि स्पष्टतया द्रष्टुम् अशक्नोत्।

नयनकान्त: मुदा याज्ञवल्क्यं परिष्वज्य अवदत्,''त्वया प्रदत्तस्य दृष्टिसामर्थ्यस्य

निधाय तत्कार्यम् अन्वतिष्ठत्। तथैव च स: समये समये भाविराजारूपेण राज्ञा नयनकान्तेन सह अमन्त्रयत् राज्ञ: प्रशंसां च प्राप्नोत्। तथापि सर्वस्यापि विदर्भराज्यस्य प्राप्त्यवसरे स: तत् विहाय किमर्थं पलायित:?

स: वचनपरिपालकोऽपि नृप: स्ववचनम् अपालयित्वा तस्य शत्रून् इव तमपि हन्यात् इत्यनया चिन्तया स: ग्रस्त: आसीत् वा? अथवा वैदर्भीयप्रजा: तं नृपरूपेण अनङ्गीकृत्य तस्मै द्रुह्येयु: इति स: अचिन्तयत्? ममैतेषां प्रश्नानाम् उत्तरं जानन्नपि त्वं मौनम् आश्रित्य तिष्ठसि चेत् ते मस्तकं सहस्रखण्डं भवेत्।''

तदा राजा इत्थं प्रत्यवदत्, ''वेताल, अन्यासाम् अपेक्षया सरलतरा: समस्या: परिहर्तुं याज्ञवल्क्येन सूचना: कृता:। परम् आपतत् युद्धं दृष्ट्वा स: भीरुवदाचरणम् अकरोत्। यदा राजा 'हतो वा प्राप्यते स्वर्गो जित्वा वा भुज्यते मही' इति वचनामादृत्य स्वमतं प्रकट्यकरोत्। तदा नृपपदं भूषयितुं के गुणा: आवश्यका: इति याज्ञवल्क्येन ज्ञातम्। स: स्वार्थाय राज्यार्थम् अयाचत। राजा तु नि:स्वार्थो भूत्वा प्रजापालनार्थं मृत्युमपि सम्मुखीकर्तुम् उद्युक्त: आसीत्।

तत् दृष्ट्वा याज्ञवल्क्यस्य मति: परिवृत्ता। राजपदम् आरुरुक्षुणा धृतिशौर्ययो: स्वामिना भाव्यम् युद्धकौशलम् आत्मसात् कर्तव्यं, प्रजापालने रतेन भवितव्यं सर्वदा त्यागाय च सिद्धेन भवनीयम्। एते गुणा: तस्मिन् नैव सन्ति इति सोऽपि जानाति स्म। अत: स: प्रासादात् पलायित:। राज्ञ: भयात् वा वैदर्भीय प्रजानां भयात् वा स: न पलायित:।''

एवं राज्ञ: मौनभङ्गे जाते वेताल: सशरीरम् अदृश्यो भूत्वा भूयोऽपि वृक्षशाखाम् आलम्बत। ***- एन् शिवनागेश्वरराव:***



# आत्मसम्मान:

**प्र**तिवर्षं सम्पद्यते स्म अतिविशाल: उत्सव: तत्रभवत: राज्ञ: विजयसेनस्य साम्राज्ये। निमान्त्रिता: च आसन् तस्य प्रतिवेशिन: जानपदा: अस्मिन् प्रसङ्गे।

कस्मिंश्चित् वर्षे कलाकारा: निष्णाता: भटा: च अदूरप्रदेशात् उपस्थिता: अस्य समारोहस्य अवसरे। तेषु एकतम: विनय: नाम युवा राज्ञ: चित्ताकर्षणस्य विषय अभूत्, तस्य विशेषकलाकौशल्येन। परिणामत: राजा विजयसेन: तं सम्मानितवान्, तस्य प्रदेशस्य नागरिकत्वप्रदानेन।

परं यथार्थनामा विनय: प्राणमत् नृपं च अवदत्- ''नृपश्रेष्ठ! तिष्ठतु तावत्''। स: प्रत्यायच्छत्  सम्मानं नम्रतया।

विजयसेन: उवाच- ''विनय! श्रुतं मया यद् ते राज्ये अतीव दुर्भिक्षम् इति, तर्हि सुखासनम् अत्रस्थं विहाय गमनं किं युक्तं?'' इति।

''महाराज! अपि जननी केनापि त्यज्यते, यद्यपि सा नातीव सुन्दरी। विविधासु स्पर्धासु सहभागिन: वयं सर्वे अत्र युष्मत्राज्ये वृक्षाणाम् अध:स्थले मासाधिकं वासं कृतवन्त: परं न कदापि केनापि सहकार्य दर्शितम् अस्मत्कृते अत्रभवत: जानपदै:। यद्यपि ते सर्वे निकटतमेषु उन्नतभवनेषु कृतावासा: तथा च जानाना: अस्माकम् अवस्थाम्। अत्र तु अतीव अभाव: दृश्यते ज्ञानस्य मनुष्यत्वस्य च।

उपकृतोऽस्मि भवत: सम्मानेन । अहम् अधिकेन सुखेन निवसामि मम जन्मभूम्याम्''। इति गभीरेण स्वरेण उक्त्वा विनय: प्रत्यागत: सहभागिभि: जनै:।

- ***अदूरी हैमवती***



अनुभूतवान्। तस्य उदरे वेदनासीत्। तस्य अतिसारपीडा आरभत। आरात्रि सः स्वच्छतागृहं पुनःपुनः गच्छन् आसीत्। अन्येद्युः सः निःशक्तः जातः।

अनन्तस्य पितामहः चिन्ताकुलः जातः। सः अचारिवैद्यमाहूतवान्। अचारिः तं परीक्षितवान्। तेन कानिचन पर्णानि निष्पीडितानि ततः तस्य एका गुलिका कृता। सा रुच्या तिक्तासीत्।

सा गुलिका एतावती तिक्तासीत् यत् अनन्तस्य वमनभावना अभवत्। रुदन् एव सः कथञ्चित् गुलिकाम् अभक्षयत्। अनन्तरम् अचारिः वृक्षत्वचः अर्कस्य कषायं तं पाययितवान्। इदानीं सः सत्यमेवारोदीत्। तथापि पितामहस्य भीत्या निःशक्तेः कारणात् सः कथञ्चित् पीतवान्। एषः उपचारः दिने त्रिवारं प्राचलत्। अचारिः उपचारार्थं दश-वराह-नाणकानि स्वीकृत्य निर्गतः।

अनन्तः केवलं पश्यन् स्थितः। तस्य पितामहः तं सस्मितम् अपश्यत् सोऽवदत् ''अस्माभिः स्वकर्मणः सर्वाणि फलानि उपभोक्तव्यानि भवन्ति। त्वया जिलेबीः निष्पीड्य गुलिकाः कृत्वा भक्षिताः। ततः निष्कासितं रसमपि पीतवान्। अचारिः त्वया जितं धनम् अनयत्। अधुना तव मुखे निष्पीडितानां पर्णानां तथा च कषायस्य तिक्ता रुचिरेव अवशिष्टा। मधुरजिलेबीनाम् अतिसेवनस्य फलमिदम्। अधुना वा स्व-दायित्वं ज्ञात्वा वर्तस्व। प्रमत्तः मा भूः कार्यमग्नः भव। तदा एव त्वं सुखेन निवससि। कृपया मम वचनमनुसरतु।''

''तात, अहं तव वचनमनुमन्ये। ज्येष्ठानामुपदेशः सङ्कटकाले आशीर्वादः एव भवति'' सः दृढनिश्चयेन उक्तवान्।

ततः आरभ्य अनन्तः आलस्यं त्यक्तवान् कार्ये कटिबद्धः च अभवत्। समीपवर्तिनि काले एव सः दायित्ववान् भूत्वा कीर्तिमाप्नोत्।






# कटुः मधुरायते

पुरा किल अनन्तः नाम एकः युवा कुम्भालपूर्ण-नाम ग्रामे वसति स्म। सः चतुरः परम् अतीव अलसः आसीत्। वस्तुतः तु स्वक्षमताविषये अतीव गर्वितचित्तः सः। सः चिन्तयति स्म यद् 'स्वस्य चातुर्येण सः भृशं धनं प्राप्तुं शक्नोमि'।

निरर्थकैः वार्तालापैः स्वचातुर्यस्य प्रशंसालापैः सः व्यर्थं कालं नयति स्म। तस्य गृहे आसीत् केवलं तस्य पितामहः। अनन्तं सन्मार्गं प्रति आनेतुं सः भृशं प्रायतत। परं सर्वं व्यर्थम्।

अतीते समये अनन्तः पणं कर्तुम् अभ्यस्तः जातः। सः पणद्वयं जितवानपि। धनप्राप्तेः एषः सुलभः मार्गः एव स्वस्य व्यवसायं कर्तुं सः अस्वप्नायत।

तस्य पितामहः तं व्यज्ञापयत् नैषः उत्तमः मार्गः परन्तु अनन्तः तस्य वचनं दुर्लक्षितवान्।

एकस्मिन् दिने सः मित्रैः सहः पणमकरोत् यत् यदि सः घण्टाभ्यन्तरे दशकिलोमितं जिलेबीमिष्टान्नं खादेत् तर्हि मित्राणि तस्मै सहस्रं रूप्यकाणि यच्छेयुः। तस्य मित्राणि तदन्वमन्यन्त।

ते दशकिलोपरिमितं जिलेबीमिष्टान्नम् आनीय अनन्तस्य पुरतः स्थापितवन्तः। सः मिष्टान्नं खादितुम् आरभत। किञ्चित्कालं यावत् सर्वं सुखावहम् आसीत्। अन्ततो गत्वा सः अतिरेकः एव आसीत्।

अनन्तः एकमुपायमकरोत्। सः सर्वाः जिलेबीः खण्डश्करोत्। ततः रसं निष्कासयत्। खण्डीकृतानां जिलेबीनाम् एकं लड्डूकं कृत्वा सोऽभक्षयत् ततः शर्करारसमपिबत्। यथावचनं मित्रैः तस्मै सहस्रं रूप्यकाणि दत्तानि।

तस्यां रात्रौ एव सः उदरे अस्वस्थताम्

**आदि लक्ष्मीः**



# पराजित: पण:

ग्रामे सर्वे जना: तस्मै वीर: इति आह्वयन्ति स्म। कष्टप्रदमपि कार्यं स: उद्वेगेन विना करोति स्म। स: लघुबालकै: सह अपि उदारतया वदति स्म। यद्यपि नैके जना: तस्मै समानं प्रश्नं पुन: पुन: पृच्छन्ति स्म तथापि स: तान् तदेव उत्तरं पुन: पुन: उद्वेगम् अदर्शयित्वा वदति स्म। वीर: कदापि क्रोधं न दर्शयति स्म न वा क्रोधस्य आटोपम्।

ग्रामीणा: विविधानि विपरीतानि कार्याणि कर्तुं तस्मै वदन्ति स्म तदर्थं च अन्नं वा धनं वा, यद् ते योग्यमिति चिन्तयन्ति तद् तस्मै यच्छन्ति स्म। तेन एव स: उपजीविकां करोति स्म। वीरस्य पत्नी एतेन उद्विग्ना भवति स्म। वीरस्य उपजीविकाया: मार्ग: तस्यै न रोचते स्म। 'दिवानिशं बहु कष्टं कृत्वा अपि वीर: तस्य योग्यतानुसारं धनं न प्राप्नोति' इति तस्या: मतम् आसीत्। वीरस्य पत्नी शीघ्रकोपशीला प्रत्युत वीर: शान्तताप्रिय:।

सा पतिम् अवदत्, ''भवान् जनद्वयस्य कार्यं करोति। किन्तु एकस्य जनस्य आयस्यापि अपेक्षया न्यूनं धनं भवान् प्राप्नोति। अस्माकं बालका: वयसा वर्धन्ते। भवत: आय: कुटुम्बस्य अवश्यकता: पूरयितुं न पर्याप्त:'' वीर: तां दृष्ट्वा स्मितं कृतवान्। स: तां गृहे स्थितं घटमेकं दर्शितवान् उक्तवान् च, ''यद्यपि वयम् एतं घटं तडागत: सागरत: वा जलपूर्णं कुर्म:, तथापि तत्र समानमात्रया एव जलं भवति। घटस्य क्षमताया: अपेक्षया अधिकं जलं तस्मिन् स्थापयितुं कथं शक्यते?'' तस्य एतेन उत्तरेण सा अतीव क्रुद्धा अभवत्। तस्य हस्तात् सा घटं

एम्.व्ही.व्ही.सत्यनरायण:



कर्षितवती, तस्य च मस्तके प्रहृतवती। तेन प्रहारेण तस्य मस्तके व्रण: जात: तत: रुधिरम् अस्रवत्। तथापि वीर: क्रुद्ध: न अभवत्। यथा सदैव स: शान्तचित्त: तथा इदानीमपि शान्ततया स: व्रणस्य औषधोपचारम् अकरोत्। वीरस्य पत्नी तस्मै उष्णं यवागुं खादितुम् अयच्छत्।

वीर: पत्नीम् अवदत्, ''पश्यतु, घटस्य कारणात् प्रहारं प्राप्नोमीति विधिलिखितम् आसीत्। तत: अहम् आत्मानं मोचयितुं न समर्थ:।''

वीरस्य पत्नी किमपि वक्तुं न शक्तवती। सा कोपावेशवशात् पत्यु: प्रहारस्य निमित्तमात्रा जाता इत्येतस्य दु:खम् अनुभूतवती।

तदानीम् एव ग्रामदूत: वीरस्य कृते ग्रामप्रमुखस्य सन्देशम् आनीतवान्। स: अवदत्, ''मलजलनलिकानां खननं करणीयम्। ग्रामप्रमुख: मां भवन्तम् आनेतुं कथितवान्।'' सद्य: एव मस्तके प्राप्तं व्रणम् अविगणय्य वीर: तत्कालमेव ग्रामप्रमुखं द्रष्टुं गतवान्।

वीरस्य गृहे जात: एष: प्रसङ्ग: राज्ञा अवलोकित:। जनानां चरितार्थं द्रष्टुं राजा वेषं परिवृत्य मन्त्रिणा सह राज्ये भ्रमणं करोति स्म। तस्मिन्नेव काले राजा वीरस्य गृहस्य समीपे आसीत्। वीरस्य गृहे य: प्रसङ्ग: जात: तं दृष्ट्वा राजा आश्चर्यचकित: सञ्जात:। 'वीरस्य अतीव शान्तिप्रियता नाम व्यवहारे मूर्खता अस्ति' इति चिन्तितवान्।

'कस्य अपि सामान्यस्य निरामयस्य च पुरुषस्य तावती शान्तता सहनशीलता च भवेत् किम्?' इति चिन्तयन् राजा मन्त्रिणा सह ग्रामप्रमुखं द्रष्टुं गतवान्। ग्रामप्रमुख: जलनलिकाखननकार्यस्य पर्यवेक्षणं कुर्वन् स्थित: आसीत् स: च वीरेण सह अन्यान् कर्मकरान् कार्यार्थं सूचना: करोति स्म।

ग्रामप्रमुख: राजानं तथा मन्त्रिणं न अभिज्ञातवान्। 'अहं भवते किं साहाय्यं करोमि इत्येव विचारयन् इव स: प्रश्नार्थकदृष्ट्या तौ पश्यति स्म। सामान्यजन: इव व्यवहरन् राजा ग्रामप्रमुखम् उक्तवान्, ''अहं चिन्तयामि यत् वीर: उद्विग्न:, क्रुद्ध:, श्रान्त: वा भवितुं न

कलायबीजम् उप्तवान्। पुन: स: क्षेत्राय जलदानं प्रारब्धवान्। अनावश्यकानि तृणानि निष्कासितवान्। सर्वाणि कृषिकार्याणि यथायोग्यं यथाकालं च कृतवान्।

इदानीमपि राजा वीरस्य मुखे उद्विग्नतां क्रोधं वा न दृष्टवान्। राजा तस्य इतोऽपि परीक्षां कर्तुम् इच्छति स्म। स: सस्यानां पर्यवेक्षणाय आगतवान् उक्तवान् च,''अहं मुद्गस्य स्थाने कलायम् इति उक्तवान्।'' राज्ञ: मथितार्थं वीर: ज्ञातवान्। स्मितं कृत्वा स: कृषिकार्यं प्रारब्धवान्। राजा अपेक्षते स्म यत् इदानीं वीर: उद्विग्न: भवेत्। किन्तु स: निराश: अभवत्।

वीर: कष्टान् अविगणय्य पुन: मुद्गसस्यानां वर्धनम् आरब्धवान्। पूर्वमिव तस्य मुखे स्मितं विलसति स्म। राजा वीरं पृष्टवान्,''शीघ्रतया वारं वारं सस्यपरितवर्तनम् उद्विग्नताया: कारणं न भवति वा?''

वीर: स्मितं कृतवान् उक्तवान् च, ''क्षम्यताम् महाराज। यदि तण्डूलसस्यानां सेवनम् अस्माकं विधिलिखितम् अभविष्यत् तर्हि तद् फलितम् अभविष्यत्। किन्तु तद् अस्माकं भाग्ये न आसीत्। अत: तद् न फलितम्। तेन एव कारणेन यद् वयं प्रारब्धवन्त: तस्य कलायसस्यस्य सा एव अवस्था अभवत्। इदानीं मुद्गसस्यस्य वर्धनं वयं कुर्म: किन्तु तस्य सेवनम् अस्माकं भाग्ये अस्ति वा इति न जाने।''

राजा तस्य सहनशीलतां दैवशरणतां च प्रशंसितवान्। स्ववचनानुसारं स: तस्य ग्रामम् आधुनिकं नूतनं च कृतवान्। वीरस्य कुटुम्बस्य सर्वा: आवश्यकता: पूर्णा: अकरोत्।

वीर: राजानम् अवदत्,''देव, पश्यतु दैववशात् मम सस्यं मम कृते किं किं दातुं समर्थम् आसीत्।''



जानाति, न वा कार्ये आलस्यं जानाति। अत: स: अज्ञ:, मूढ: वा भवेत्। सामान्य: निरामय: पुरुष: कदापि तादृशम् आचरितुं न अर्हति। भवान् किं चिन्तयति?''

ग्रामप्रमुख: अवदत्, ''स: न वा अज्ञ: न वा मूर्ख:। भवन्तौ परकीयौ अत: तस्य आचरणम् अयोग्यमिव ज्ञात्वा भवन्तौ तथा वदत:। बीर: कथं व्यवहारकुशल: अस्ति इति ज्ञातुं भवन्तौ अवसरं न प्राप्तवन्तौ।'' राजा ग्रामप्रमुख: च विवादं प्रारब्धवन्तौ। तौ परस्परं पणं कृतवन्तौ। राजा उक्तवान् यत्,'' यदि अहं वीर: मूर्ख: इति सिद्धं न करोमि तर्हि अहं बहुव्ययं कृत्वा तं ग्रामं नूतनम् आधुनिकं विकसितं च करिष्यामि''। पूर्वं ग्रामप्रमुखेण राजा न अभिज्ञात:। किन्तु इदानीं तेन क्षमायाचना कृता। 'तेन सह पण: कृत: इत्येष: एव प्रमाद: अभवत्' इति स: अङ्गीकृतवान्।

किन्तु राजा स्मितहास्यं कृतवान्। ''पण: तु पण: एव भवेत्'' इति स: उक्तवान् अनन्तरं स: बीरं स्वीकृतवान् राजधानीं प्रति च मन्त्रिणा सह प्रस्थितवान्। तस्य प्रासादस्य पृष्ठत: विशाले प्राङ्गणे स: वीरं तण्डूलान् वप्तुम् आदिष्टवान्। प्रथमत: बीर: योग्यं बीजं न प्राप्तवान्। यदा स: योग्यं बीजं प्राप्तवान् तदा तस्य साहाय्यार्थं कर्मकरा: न उपलब्धा: आसन्। तथापि बीर: एकाकी अतीव श्रमेण बीजानि



उप्तवान्। स: कालान्तरेण क्षेत्राय जलं ददाति स्म। स: अनावश्यकं तृणं निष्कासयति स्म। अतीव कष्टेन स: तण्डूलानां कृषिकार्यं करोति स्म। कदाचित् जलं सस्यान् प्रति न प्राप्नोति स्म। तदा स: कूपात् जलं निष्कास्य स्वयं सस्येभ्य: जलं ददाति स्म। यदा तण्डूलानां सस्यं वर्धितं तस्मिन् तण्डूलधान्यं च पक्वं तदा राजा बीरम् आहूतवान्। राजा तम् उक्तवान्,''तत्कालमेव तण्डूलसस्यं निष्कासयतु। तस्मिन् स्थले कलायस्य सस्यं बर्धयतु। वयं तु अस्माकं राज्ये तण्डुलानाम् आधिक्यम् अनुभवाम:।'' एकमपि शब्दमनुच्चार्य बीर: क्षेत्रं प्रति गतवान्। तण्डूलानां सस्यं नष्टं कृतवान्। पुन: भूमिं कर्षितवान्। एकाकी एव



# पञ्चतन्त्रकथा

## धूर्तस्य कथा

**को**सलदेशस्य राजधान्याम् अयोध्यायाम् आसीत् एक: राजा सुरध: नाम। नैके राजान: तस्य माण्डलिकरुपेण अवर्तन्त।

एकदा वनविभागस्य कश्चन अधिकारी राजधानीं प्राप्य राजानम् एवम् अब्रवीत्, ''महाराज, वर्तते विघ्नक: नाम कश्चित् विद्रोही। नेतरि तस्मिन् सर्वा: वन्यज्ञातय: विद्रोहं कर्तुं सिद्धा:। नाहं समर्थ: तेषां विद्रोहं दमयितुम्, अत: अस्मिन् विषये भवानेव किमपि करोतु।''

एतद् ज्ञात्वा राजा अपि विद्रोहिणां दमनं कृत्वा तेषां दण्डनार्थं स्वस्य प्रज्ञाशालिनं मन्त्रिणं बलभद्रं नियुक्तवान्।

गतवति बलभद्रे ग्रीष्मर्तो: अन्तिमे दिने कश्चन दिगम्बर: संन्यासी अयोध्यायां समायात:। सर्वेषां होरापत्राणि कृत्वा भविष्यकथनम्, शकुनानां सङ्केतफलकथनं, शुभमुहूर्तानां कथनं, गुप्तनामानां कथनम् इत्यादिभि: अचिरादेव नगरवासिषु स: मान्यतां प्राप्तवान्।

संन्यासिन: विषये नैका: कथा: राज्ञ: अपि श्रुतिपथमायाता:। तस्य मनसि एता: वार्ता: महत्कौतुहलम् अजनयन्। स्वप्रासादे तं सन्यासिनं निमन्त्र्य स: पृष्टवान्, ''महानुभाव, अन्यस्य मनसि विद्यमानान् भावान् वक्तुं शक्नोति भवान् इति मया यद् श्रुतं अपि तद् सत्यम्?''

''यत्र यत्र मया यद् यद् कृतं तद्विषये ज्ञात्वा स्वयमेव ज्ञास्यति भवान् मम सिद्धिविषये''। एवं प्रकारेण संन्यासी राजानं

मित्रभेद:-२२



स्वस्य परिचयं कारितवान्। तेन राजा चकित: जात:।

राजा संन्यासिन: कृते स्वस्य प्रासादे एव निवासार्थं मठं प्रदत्तवान्। तथा च प्रतिदिनं तस्य मुखात् उपदेशामृतम् अपि श्रुतवान्।

एकस्मिन् दिने सायङ्काले संन्यासी राजप्रासादम् आगत्य अवदत्, ''राजन्, एकां शुभवार्तां श्रावयितुम् इच्छामि। अद्य विविधदेवताभि: अनुरोधे कृते सति अहं भौतिकदेहेन मठं त्यक्त्वा सूक्ष्मदेहेन साक्षात् स्वर्गं गतवान्।

किञ्चित्कालात्पूर्वमेव प्रत्यागत्य अहं पुन: स्वशरीरं प्रविष्टवान् अस्मि। स्वर्गस्थसुरै: अत्रभवत: कुशलं पृष्टम्।''

एतां वार्तां श्रुत्वा राजा आश्चर्यमुग्ध: भूत्वा पृष्टवान् ''महात्मन्! परन्तु कथं स्वर्लोकं प्राप्त: भवान्?''

''महाराज! मत्कृते स्वर्गगमनं क्रीडा इव सहजम्। स्वर्गं प्रति गमनागमनं तु नित्यं प्रवर्तते एव।'' इति संन्यासिना उत्तरं दत्तम्।

संन्यासिन: शक्तिप्रदर्शनं बहुवारं राजा अनुभूतवान् आसीत् तथा तेन कृतानां चमत्काराणां विषये श्रवणेन स्वस्य मुग्धतया च स्वर्गगमनवार्तायां झटिति राजा विश्वासं कृतवान्। तस्मात् दिनात् आरभ्य राजा राजकार्ये रूचिं न दर्शितवान्। राज्ञ्या: अपि उपेक्षां कृतवान्। केवलं संन्यासिन: सन्निधम् उपविश्य स्वर्गलोकस्य वार्ताश्रवणे मग्न: भवति स्म। राज्ञ: एतेन व्यवहारेण राजपरिवारस्य अवस्था कष्टमयी जाता।

अत्रान्तरे वन्यज्ञातीनां विद्रोहं दमयित्वा बलभद्र: अपि अयोध्यां प्रतिनिवर्तितवान्। राजधानीं प्रत्यागत्य एव स: अजानात् यत् राजा सर्वथा संन्यासिन: अधीन: जात: अस्ति। न राजसभां गच्छति न वा मन्त्रिभि: सह परामृशति। बलभद्र: साक्षात् राजप्रासादं गतवान्। निर्मनुष्या आसीत् राजसभा। प्रासादे एकस्मिन् प्रकोष्ठे राजा तथा संन्यासी एकान्ते उपविष्टौ तेन दृष्टौ। तस्मिन् समये राज्ञ: कर्णे संन्यासी कामपि गुप्तवार्तां श्रावयन्नासीत्। राजा अपि प्रफुल्लवदन: अवधानेन संन्यासिन: वार्तां श्रुण्वन् आसीत्।



# सत्यप्रियता

भूमिपालस्य शिवचन्द्रस्य त्रय: प्रामाणिका: सेवका: आसन्। बीरराजु:, भूषण:, नागय्य: एते ते स्वामिनिष्ठा: सेवका:। शिवचन्द्र: सदैव तेषां योगक्षेमं पृच्छति स्म। आपद्समये तेषां साहाय्यं करोति स्म।

भूमिपालस्य समृद्धं सम्पन्नं च जीवनं प्रति भूषण: आकर्षित: भवति स्म। 'अहमपि तथैव ऐश्वर्यसम्पन्नं जीवनम् अनुभवेयम्।' इति स: मनसि चिन्तयति स्म। ग्रामे जम्भुलिङ्ग: नाम कृषक: भूमिपालेन सह सदैव कलहायमान: आसीत्। भूमिविभाजनम् अधिकृत्य तयो: मध्ये कलह: अभवत्। न्यायालये व्यवहार: अभवत्। परिणामत: भूमिपाल: समस्याग्रस्त: अभवत्। न्यायालयस्य निर्णयकारणात् भूमिपाल: विस्तृताया: भूमे: स्वामित्वात् बञ्चित:।

तस्य समीपे अधुना केवलं लघुगृहमेकम् अवशिष्टम्। तस्य सर्वा अपि संपद् नष्टा । स: सर्वान् सेवकान् तथा कृषिकर्मकरान् सेवात: बिमुक्तान् अकरोत्। अधुना केवलं सेबकत्रयम् अवशिष्टम्।

शिवचन्द्र: सेबकानां भविष्यकालं चिन्तितवान्। स: तस्य गृहं बिक्रीतवान्। त्रयाणां सेबकानां कृते तस्य धनस्य बिभाजनं कृतवान्। ''मम साम्पत्तिकी स्थिति: अधुना विपरीता। यदि भवन्त: मया सह स्थास्यन्ति तर्हि भवताम् अपि भविष्यम् अनिश्चितं भवेत्। भविष्ये दुष्परिणाम: भवेत्। एतावतां बर्षाणां पर्यन्तं

अरुपल्ली गोविन्दराजुलु

प्रथमदृष्टिक्षेपे एव मन्त्री सर्वम् अभिज्ञातवान्। महाराजस्य पुरत: साष्टाङ्गं प्रणिपत्य स: अवदत्, ''जयतु जयतु महाराज!'' राजा बलभद्रं विद्रोहविषये किमपि न अपृच्छत् प्रत्युत एतद् पृष्टवान् ''मन्त्रिवर! किं भवान् एतं महापुरुषं जानाति?''

''क: बराक: एतं महात्मानं न जानीयात्? नैके महापुरुषा: अपि अस्य शिष्या: जाता: सन्ति। एतस्य लीलया स्वर्गगमनविषये अपि मया श्रुतम् अस्ति। किमेतद् वास्तविकम्?''

''नि:संशयमिदम्'' इति राज्ञा उक्तम्। मन्त्रिण: मुखात् स्वस्य प्रशंसां श्रुत्वा अतिमात्रं प्रफुल्ल: संन्यासी। स्वस्य विषये मन्त्रिण: मनसि इतोऽप्यधिकम् आदरं जनयितुमवदत्, ''यदि स्यात् कौतुहलं मन्त्रिमहोदयस्य मनसि अस्मिन् विषये तर्हि स्वयमेव अनुभवतु स: तद्'' एवम् उक्त्वा मठं प्रविश्य स: अन्तस्तात् द्वारि अर्गलं स्थापितवान्। किञ्चित्कालानन्तरं मन्त्री राजानम् अपृच्छत्, ''अयं महात्मा स्वर्गात् कदा प्रत्यागच्छति?''

''किमर्थम् इयं त्वरा? स्वामी तु भौतिकदेहं मठे परित्यज्य सूक्ष्मदेहेन स्वर्गं गतवान् अस्ति।'' इति राजा अवदत्।

''यदि एतद् सत्यं तर्हि अग्निना सह इन्धनम् आनाययतु। मठमिदम् अग्निसात् करिष्यामि'' इति मन्त्रिणा सूचितम्।

''किमर्थम् अयं व्यवहार:? राजा आश्चर्येण पृष्टवान्।

''महाराज! किं भवान् इदं प्रश्नं पृच्छति? काष्ठसमम् इदं भौतिकशरीरं यद्यपि नष्टं भवति तथापि सूक्ष्मशरीरेणैव अत्र राजप्रासादे भवत: समीपे आगच्छति साधुवर्य:। तेन तस्य कीर्तिपरिमल: समग्रे विश्वे प्रसरेत्। अस्मिन् विषये अहं नागकुमारस्य एकां कथां भवते कथयामि।'' इति उक्त्वा मन्त्री तां कथां कथयितुम् आरब्धवान्। ***(अनुवर्तते)***



भवन्तः निष्ठया मम सेवां कुर्वन्ति स्म अतः कृतज्ञतारूपेण एतद् धनं समर्प्यते। तस्य चातुर्येण उपयोगं कुर्वन्तु, आनन्देन सकुटुम्बं जीवन्तु'' इति सः उक्तवान्। त्रयः सेवकाः धनं स्वीकृतवन्तः किन्तु स्वामिनः ताम् अवस्थां दृष्ट्वा तेषां हृदयं दुःखेन पूर्णम्।

वीरराजुः स्वामिनः दत्तेन धनेन मृत्तिकाक्रीडनकानां विक्रयणस्य व्यवसायम् आरब्धवान्। नागय्यः काष्ठानां व्यवसायम् आरब्धवान्। भूषणः चतस्रः धेनूः क्रीतवान्, दुग्धव्यवसायम् आरब्धवान् च। आचिरात् एव तेषां व्यवसायाः सुष्ठु प्रचलिताः।

कश्चित् कालः सम्यक् व्यतीतः। एकस्मिन् दिने सहसा चक्रवातः प्रादुर्भूतः। प्रभञ्जनः एषः एतादृशः भयङ्करः आसीत् यत् गृहाणि नष्टानि, वृक्षाः च उन्मूलिताः। पर्जन्यजलेन वीरराजोः मृत्तिकाक्रीडनकानि भग्नानि, नागय्यस्य काष्ठानि च आर्द्रानि अभवन्। महापूरस्य जलेन भूषणस्य धेनवः निमग्नाः नष्टाः च।

पुनः व्यवसायस्य नूतनतया आरम्भं कर्तुं तेषां समीपे पर्याप्तं धनं न आसीत्। अधुना तेषां समीपे किमपि न अवशिष्टम्। जम्भुलिङ्गः तेषाम् असहायावस्थायाः लाभम् इच्छति स्म। ''मया सह आगच्छतु। अहं भवतः साहाय्यं करिष्यामि'' इति सः उक्तवान्।

वीरराजुः तथा नागय्यः तस्य प्रस्तावं सहर्षम् अङ्गीकृतवन्तौ। किन्तु भूषणः तस्य प्रस्तावं न



स्वीकृतवान्। ''अहं स्वकष्टेन उपजीविकां प्राप्नोमि।'' इति सः प्रत्युत्तरं दत्तवान्।

अचिरात् एव जम्भुलिङ्गस्य साहाय्येन वीरराजुः नागय्यः च पुनः धनसम्पन्नौ जातौ। प्रत्युत भूषणः दारिद्र्ये कथञ्चित् कालं यापयति स्म। शिवचन्द्रः भूषणस्य परिस्थितिं ज्ञातवान् तं च मेलितुम् आगतवान्। भूषणः स्नेहेन स्वामिनः स्वागतम् अकरोत्। भूषणस्य पत्नी पार्वती स्वामिने पातुं तक्रं दत्तवती। सम्भाषणावसरे शिवचन्द्रः उक्तवान्, ''भवतः दारिद्र्यावस्थां श्रुत्वा अहं भवन्तं मेलितुम् आगतः। यदि भवता अपि जम्भुलिङ्गस्य साहाय्यं स्वीकृतवान् स्यात् तर्हि भवानपि ताभ्यां समानः उद्योजकः भूत्वा सुखमयं जीवनम् अनुभवन् स्यात्।''

भूषणः प्रत्युत्तरं दत्तवान्, ''मम अपि स्वप्नः आसीत् यत् अहं अन्यैः सदृशं सुखमयं जीवनं जीवेयम्। किन्तु तदर्थम् अयोग्यं मार्गं स्वीकर्तुम् अहं न इच्छामि। कतिचन वर्षाणि यावत् वयं भवतः कृपावत्सलताभ्यां सुखेन जीवनं यापितवन्तः। जम्भुलिङ्गः भवतः कृते अतीव पीडाकरः अभवत्। सः एव भवन्तम् एतादृशीम् अवस्थां प्रापितवान्। स्वसुखकारणाय तौ एतादृशस्य दुष्टस्य साहाय्यं स्वीकृतवन्तौ। भवतः निष्ठावान् सेवकः अहं भवतः शत्रुणा सह सख्यं कर्तुं न अर्हामि।'' भूषणस्य वचनं श्रुत्वा शिवचन्द्रः सगद्गदं भावनाविवशः भूत्वा उक्तवान्, ''भवान् एव मम विश्वासार्हः सेवकः। भवता विना अहं जीवितुं न शक्नोमि। मया सह आगच्छतु। यावत् अहं जीवामि तावत् भवान् कृपया मया सहैव तिष्ठतु।'' पुनः स्वामिनः सेवां कर्तुम् अवसरः प्राप्तः इत्यतः भूषणः आनन्दितः।






# परीक्षा

कदाचित् जगननामा कोऽपि नरः तस्य व्यापारकर्मणां तथा च अन्यसंपदां सर्वेक्षणाय कमपि सहायकम् अन्विष्यन् आसीत्। भिक्षनामा तस्य मित्रम् तत्सर्वम् अजानीत। सः तस्य आप्तस्य श्रावणस्य नाम असूचयत्। सः श्रावणः नगरे तत्पदस्य शिक्षणम् अगृह्णीत। जगनः अवदत्, 'भवतु! पश्यामस्तावत्। श्वः मां मेलितुं सः आगच्छतु' इति। तत्समये एव एकः अन्यः सुमन्तनामा युवा जगनं प्रति आगच्छत् प्रार्थयत च, ''महोदय, भवान् स्वव्यापारकर्मणां सर्वेक्षणार्थं कमपि सहायकम् अन्विष्यति, इति वृत्तं ज्ञातं मया। कृपया तत्पदस्य कृते मां योजयतु'' इति। ''श्वः मां द्रष्टुम् आगच्छ'' इति उक्त्वा जगनवर्येण सः स्वगृहं प्रेषितः।

अन्येद्युः सुमन्तः तथा च श्रावणः जगनं द्रष्टुम् आगच्छताम्। सः तौ गृहस्य पृष्ठतः अङ्गणम् अनयत् अवदत् च ''मम पूर्वजैः अत्र किञ्चन सुवर्णं निगूढम्' इति कथ्यते। मम सेवकैः तु चतुर्षु कोणेषु पूर्वमेव खननमारब्धम्। अधुना मम ज्योतिर्विद्,'मह्यम् ईशान्यदिशि तथा च नैऋत्यदिशि अपि खननार्थम् अकथयत्। कृपया एकस्मिन् कोणे खननमारभेताम्।''

श्रावणः मनसि अकरोत् ''मया कीदृशस्य कार्यस्य अपेक्षा वर्तते। खननकार्यस्य आदेशेन मत्सदृशं सुशिक्षितं मनुष्यं सः किमर्थं परीक्षितुमिच्छति?'' इति विलपन् सः खनितुमारभत। सुमन्तः तु शान्ततया नैऋत्यदिशि खननाय आरभत।

केनचित् कालेन जगनः श्रावणम् प्रति गत्वा अपृच्छत्,''फलप्राप्तेः शक्यता अस्ति किम्?'' इति। श्रावणः अशान्ततया प्रत्यवदत्,''अहं तु

जोन्नलगाड्डा रत्न




# अलसः गर्दभः

कस्मिन्नपि ग्रामे गङ्गदीनः नाम मनुष्यः प्रतिवसति स्म। सः नैकान् व्यवसायान् करोति स्म। सः उद्यमशीलः आसीत्। अर्जितस्य धनस्य परिपालने अपि सः कुशलः आसीत्। एतैः एव तस्य सद्गुणैः सः धनसम्पन्नः अभवत्।

तस्य समीपे कतिचन गर्दभाः आसन्। सः स्वस्य विविधेषु व्यवसायेषु भारवहनार्थं तेषाम् उपयोगं करोति स्म।

तेषु एकः गर्दभः अतीव अलसः आसीत्। उद्यमः तस्मै सर्वथा न अरोचत। न केवलं सः स्वयं कार्यं वर्जयति अपि तु अन्यान् अपि कार्यपराङ्मुखान् करोति स्म।

गङ्गदीनः प्रतिदिनं तस्य क्षेत्रात् तृणं लुनाति स्म। तच्च तृणं सः गर्दभैः वाहयति स्म। ग्रामे तस्य तृणस्य विक्रयणेन सः धनं सम्पादयति स्म। अयम् अलसः गर्दभः अपि एतत् तृणं वहति स्म। सः प्रतिदिनः तस्य सहकारिभ्यः कथयति स्म, ''अहो दुष्करम् इदं कार्यम्! प्रतिदिनम् एतस्य भारस्य वहनेन अहं मृतप्रायः इव भवामि। यदि स्वामी किमपि अन्यत् कार्यं दद्यात् तर्हि सुखं भवेत्'' इति। तद् श्रुत्वा गङ्गदीनः तं गर्दभं काष्ठसङ्ग्रहणव्यवसाये न्ययोजयत्।

सप्ताहः अतीतः। सः अलसः गर्दभः तस्य सहकारिणः दुःखेन अपृच्छत्, ''इदं कार्यं तु दुष्करतरम्! एतादृशं कार्यं कुर्वन् नाहं म्रिये। कथं यूयम् एतावन्तं भारं प्रतिदिनं

सृष्टी शेषाद्री

कतिपयतासिका: यावत् खनामि। अद्यपर्यन्तं मया केवलं पङ्कं तथा च ऋति: एव प्राप्ता। अत्र तु सुवर्णलाभस्य काचन संभाव्यता न दृश्यते मया। अनन्तरं जगन: सुमन्तं प्रति गत्वा अवदत्, ''श्रावण: वदति यद् केवलम् ऋतिं तथा च पङ्कं विना अत्र न किमपि। क: च तवानुभव:? सुमन्त: प्रत्यवदत्,''यस्य अन्वेषणाय भवता अहम् आदिष्ट: तद् सुवर्णप्राप्त्यर्थमेव अहमत्र खनामि। तदहम् अन्वेष्टुम् असमर्थ:। किन्तु तत्र ऋतिपङ्कयो: सञ्चयमहं न अपश्यम्।'

जगन: सस्मितम् अभणत्, 'संप्रति: त्वं खननात् विरमस्व।' एवमुक्त्वा जगन: अगच्छत्। तदनन्तरं स: स्वमित्रं भिक्षम् आह्वयत् अवदत् च, ''कृपया अन्यथा मा चिन्तयस्व। अहमेतद् पदं सुमन्ताय दातुं निर्णितवान्।''

भिक्ष: तस्य निर्णयं श्रुत्वा चकित:। स: अपृच्छत्,''श्रावण: सुमन्तस्य अपेक्षया कथं पात्रताहीन:? त्वं केन कारणेन तं न्यक्कृतवान्?'इति।

जगन: तं प्रत्यवदत्, ''अहं द्वाभ्यामपि युवकाभ्यां भूमिगतं सुवर्णलाभार्थं खननाय अकथयम्। तत्कृते कार्यकरणे श्रावण: केवलं पङ्कं तथा ऋतिं च अपश्यत्। तत्समीपे यावत् सुवर्णं न लभते तावत्पर्यन्तं खननार्थं सहनशक्ति: नास्ति। सुमन्तस्य ध्येयं तु केवलं सुवर्णलाभ: आसीत्, यद् सुवर्णं स: अन्वेष्टुमर्हति। सुवर्णमिव तस्य लक्ष्यम्। अत: खननकार्ये यद् बहि: आगच्छति तद् केवलं पङ्कं च ऋतिं च विद्यते, इति विचार: तेन न कृत:। अहमपश्यम् यद् सुमन्त: कष्टपूर्वकं कार्यं करोति तथा च स्वीकृतस्य कार्यस्योपरि एव स्वचित्तम् एकाग्रं करोति। अत एव मया सुमन्तस्य एव निर्वाचनम् कृतम्। वस्तुत: मया तत्र सुवर्णं न निगूढम्। सा तु तयो: कृते एका परीक्षा आसीत्। सुमन्त: अस्यां परीक्षायाम् उत्तीर्ण: अभवत्। भिक्षोऽपि जगनस्य योग्यं निर्णयम् अन्वमोदत।



बोढुं शक्नुवन्ति?'' इति। कस्मिंश्चित् दिने सः पुनरपि आलस्येन अवदत्, ''मम स्वामी मह्यं किमपि अन्यत् कार्यं दद्यात् चेत् वरम्। नाहम् एतं भारं बोढुं समर्थः'' इति।

तत् श्रुत्वा तस्य स्वामी तं सिकतानां व्यवसाये न्ययोजयत्। तदपि कर्तुम् अनिच्छता गर्दभेन तस्य सहकारिणः उक्ताः, ''हन्त! एतावतः भारस्य वहनम् अशक्यं मत्कृते। कथं भवन्तः एतावन्तं भारं वहन्ति? अयं भारः सकृत् ऊढः चेत् आसप्ताहं दुनोति मम शरीरम्'' इति।

तदपि कार्यम् असहमानः सः कदाचित् पुनरपि आलस्येन अवदत्,''यदि अस्माकं स्वामी माम् अन्यस्मिन् कार्ये नियोजयेत् तर्ह्येव वरम्'' इति।

तस्य पार्श्वे स्थितः गर्दभः सभयम् इव अवदत्, ''मित्र मा एवम् उच्चैः वद। यदि आवयोः स्वामी एतद् शृणुयात् तर्हि त्वया सह मामपि अन्यस्मिन् व्यवसाये नियोजयेत् सः'' इति।

''भवतु तथा। तत्र वा इतः उत्तमा परिस्थितिः स्यात्'' इति अलसः गर्दभः मुग्धतया अवदत्। तस्य सहकारी गर्दभः शनैरेव अपृच्छत्,''तस्य इतरः, चरमः च व्यवसायः कः इति किं जानासि त्वम्?'' इति। ''न खलु'' इत्यवदत् सः अलसः गर्दभः। ''सः व्यवसायः अस्ति मांसस्य त्वचः च विक्रयणम्। सः अलसान् अनुपयुक्तान् च गर्दभान् हत्वा तेषां त्वग्मांसौ विक्रीणीते'' इति अवदत् तस्य सहकारी गर्दभः।

एतावता एव सः अलसः गर्दभः तस्य आलस्यं सर्वथा व्यस्मरत्। तदा प्रभृति सः महता परिश्रमेण समीचीनतया च कार्यम् अकरोत्।






# रघुवंश:

महाराजस्य दिलीपस्य पट्टराज्ञी आसीत् सुदक्षिणा। सर्वा सुखसम्पद् ताभ्यां प्राप्ता आसीत् न प्राप्तम् आसीत् केवलम् अपत्यसुखम्। अत: राजा दिलीप: पत्नीं सुदक्षिणां स्वीकृत्य गुरुवसिष्ठस्य आश्रमम् अगच्छत् तम् अपृच्छत् च यत् 'तयो: भाग्ये वंशरक्षायै अपत्यप्राप्ते: योग: अस्ति अथवा न'।

वसिष्ठस्य आश्रमे नन्दिनी नाम एका दिव्या गौ: आसीत्। ''एषा गौ: न सामान्या। एषा कामधेनो: पुत्री अस्ति। यदि युवाम् उभौ अस्या: सेवां कुर्यातां तर्हि निश्चयेन युवयो: मनीषा पूर्णा भवेत्'' वसिष्ठ: राजानम् उपादिशत्।

महाराज: महाराज्ञी च प्रतिदिनं प्रभाते उत्थाय स्नानं कृत्वा पुष्पै: गावं पूजयन्ति स्म। यदा गोवत्स: दुग्धं पीत्वा सन्तुष्यति स्म तदा राजा तां वनं चरितुं नयति स्म। अतीव दक्ष: स: तां रक्षति स्म। सायङ्काले तां स्वीकृत्य आश्रमम् आगच्छति स्म। एवम् एकविंशति: दिनानि भूपाल: गोपाल: भूत्वा धेनो: सेवाम् अकरोत्।

द्वाविंशतितमे दिने प्रतिदिनम् इव राजा नन्दिनीं चरितुम् अनयत्। तस्मिन् दिने धेनु: हिमालयपर्वतम् अगच्छत्। तस्य पर्वतस्य औनत्यं, सौन्दर्यं, गहनतां च पश्यन् नृप: किञ्चित्कालं यावत् धेनुं व्यस्मरत् इव। तस्मिन्नेव क्षणे गौ: एकां गुहां प्राविशत्।

पी.व्ही.चन्द्रमूर्ती



राजा अब्रवीत्। तस्य वचनं श्रुत्वा सिंहः उच्चैः अहसत् "त्वं तु सत्यमेव मां मूर्खः इति प्रतिभाति। यदि तव गुरुः अस्याः धेनोः अभावेन समस्याम् आवहति तर्हि किं त्वं तस्मै एतादृशीः धेनुकोटीः दातुम् असमर्थः असि? किम् अखिलभूमण्डलस्य सार्वभौमः सम्राट् त्वम् अस्याः धेनोः कृते प्राणत्यागं कर्तुम् इच्छसि? चिन्तय, यदि त्वं प्राणत्यागं कुर्याः तर्हि एषा एका गौः एव जीवनदानं प्राप्नुयात् परं यदि त्वं जीवसि तर्हि समस्तप्राणिमात्राणां पिता भूत्वा तेषां रक्षणं कर्तुं त्वं शक्नुयाः। कथं वा अस्मिन् विषये त्वया न चिन्तितम्?" सिंह उत्तरितवान्।

इदं वचनं श्रुत्वा नन्दिनी करुणापूर्णदृष्ट्या नृपतिम् अपश्यत्। तज्ज्ञात्वा राजा सिंहाय स्वमतं श्रावितवान् । सोऽवदत्-'भवान् मां भूमण्डलसमाट् इति प्राशंसत्। परं शृणु यदि अहम् एकां गावमपि रक्षितुम् असमर्थः अस्मि तर्हि किं वा अहं सम्राट्पदयोग्यः? यथा भवान् एतं देवदारवृक्षं रक्षति तथाऽहम् एतां गावं रक्षामि। किम् एकाम् असहायां गावं तथैव त्यक्त्वा गमनं मम क्षात्रधर्मस्य विरुद्धं नास्ति वा?

अन्यत् नाम भवान् एवम् उक्तवान् यत् अहम् अस्याः गावः निमित्तं स्वप्राणत्यागं किमर्थं करोमि इति। तर्हि शृणु, एषा धेनुः न कापि सामान्या धेनुः अपि तु एषा कामधेनोः पुत्री। अतः भवान् मम नश्वरं शरीरं भक्षयित्वा मम कीर्तिम् अमरां करोतु। मम शरीरस्य चिन्तां त्यज। मां खादित्वा तव बुभुक्षा तु शान्ता भवेत्। अन्यथा को वा अस्य उपयोगः? मम वचनम् अनुमन्यताम्' दिलीपः एवं प्रकारेण अनुनयम् आरभत।

'अस्तु। तथैव भवतु।' इति वदन् सिंहः नन्दिन्याः पृष्ठात् अकूर्दत्। तस्य कूर्दनादेव राज्ञः हस्तः बन्धमुक्तः जातः। सः सिंहस्य कवलं भवितुं सिद्धः जातः। भगवतः ध्याने




तत्र सा एवम् आक्रोशत् यथा सा कस्याश्चित् विपदि अपतत्। तस्या: आर्तं स्वरं श्रुत्वा चकित: नृप: ताम् अन्विष्यन् गुहां प्राविशत्। तत्र तेन दृष्टं यत् एक: सिंह: धेनो: पृष्ठे उपविश्य तां खादितुं सज्ज: अस्ति। अनुक्षणं नृप: बाणं निष्कासयितुं प्रायतत।

परं तस्य हस्त: तत्रैव स्तम्भित: जात: स: च बाणं बहि: निष्कासयितुम् असमर्थ: जात:। स्तिमितं तथा च क्रुद्धं नृपं तत्र चित्रवत् स्थितं दृष्ट्वा स: सिंह: मनुष्यवाण्या अवदत्।

''हे राजन् शातचित्त: भव। यद्यपि त्वं मयि बाणं क्षिपे: तथापि तेन मम न कापि हानि:। यत: अहं भगवत: शिवस्य परमभक्त: कुम्भोदर: अस्मि। भगवान् यदा वृषभे उपवेष्टुम् इच्छति तदा सः मम पृष्ठे पादं स्थापयित्वा एव उपविशति। अहम् अत्र रक्षकस्य कार्यं निर्वहामि। अत: अत्र प्रविष्ट: प्रत्येकं प्राणी मम भक्ष्यं भवितुम् अर्ह:। तत्र देवदारवृक्षं पश्य। देवी पार्वती तं प्रेम्णा पालितवती। परम् एकस्मिन् दिने एक: उन्मत्त: गज: वृक्षस्य हानिम् अकरोत्। तद् दृष्ट्वा देवी पार्वती अतीव दु:खिता जाता। अत: भगवान् शिव: मां रक्षकरूपेण नियोजितवान्। अस्य गाव: आयु: इदानीं समाप्तप्रायम् अस्ति अतः एतां खादित्वा अहं मम बुभुक्षां शमयामि। अधुना त्वम् इत: साधय'' इति सिंह: अगदत्।

परं नृप: दिलीप: किञ्चिदपि न विचलित: जात:। ''एवं तर्हि भगवत: शिवस्य प्रभावेण एव मम हस्त: निश्चल: जात: आसीत्। अत: अहं बाणै: मम धेनुं रक्षितुं न शक्तवान्। परं तस्या: स्थाने अहं तव भक्ष्यं भवितुम् इच्छामि। तस्या: धेनो: वराक: वत्स: दुग्धार्थं प्रतीक्षायां स्यात्। अत: तस्या: वत्सं विचिन्त्य वा तां त्यजतु। मम गुरु: वसिष्ठमुनि: तां विना बहु कष्टम् अनुभवेत्''

मग्न: अभवत् दिलीप: ।

इदानीं सिंह: मयि कूर्देत् इति चिन्तयति सत्येव अकस्मात् तस्मिन् पुष्पवर्षाव: जात:। क्रूर: सिंह: तस्मिन् न न्यपतत् परं स्निग्धा वाणी तस्य कर्णयो: आपतत् 'राजन् उत्तिष्ठ'। राजा नेत्रे उन्मील्य अपश्यत् परं तत्र सिंह: नासीदेव।

राजा सविस्मयं पृष्ठत: अपश्यत् तत्र नन्दिनी स्थिता आसीत्। सा अवदत् ''क: अन्य:? अहमेव तव परीक्षां कर्तुम् इदं नाटकं व्यरचयम्। सिंह:, देवदारवृक्ष:इति सर्वं मया कल्पनया रचितमासीत्। क: अपि मां तिर्यक् दृष्ट्वा न पश्येत्। अहं तव धर्मप्रियतां परीक्षमाणा आसम्। इदानीं यं वरम् इच्छसि तं याचस्व '' नन्दिनी नृपम् न्यगदत्।

राजा सविनयम् अवदत्-''अम्ब एतादृशं पुत्रं देहि येन मम वंशरक्षणं भवेत्''।

एतच्छ्रुत्वा गौ: तम् अवदत्- ''अञ्जलिपूर्णं दुग्धं मां दोग्ध्वा पिब'' इति। परं राजा अवदत्-''प्रथमम् आश्रमं प्रत्यागत्य भवती तव वत्सं पाययतु। अनन्तरं यत् दुग्धमवशिष्येत् तदहं गुरो: वसिष्ठस्य पुरत: स्थापयामि अनन्तरं स यथा आज्ञापयेत् तथा।''

तस्य वचनमाकर्ण्य नन्दिनी भृशं सन्तुष्टा जाता आश्रमं प्रत्यागच्छत् च। धेनो: दुग्धं पीत्वा राजा सुदक्षिणया सह अयोध्यां न्यवर्तत। यथाकालं सुदक्षिणा एकं सुपुत्रं प्रसूतवती।

तस्य शिशो: नाम रघु: इति कृतम्। राज्याभिषेकानन्तरं रघु: प्रसिद्ध: भूप: अभवत्। तस्य महिम्ना एव, तस्य नाम्ना तस्य वंश: प्रसिद्धिमाप्नोत्-''रघुवंश:'' इति।





समापयितुम् इच्छति स्म।

समुद्रस्य समीपे धीवराणां समूहः निवसति स्म। तत्र केनचित् दृश्येन तस्य अवधानम् आकृष्टम्।

कस्यचित् गृहस्य अङ्गणे प्राकारखण्डः आसीत्। तस्मिन् एका लघुबालिका तिष्ठति स्म। सा चलितुं प्रायतत। यदा यदा सा चलितुं प्रयतते स्म तदा तदा सा पतति स्म। सा पुनः पुनः चलितुम् इच्छति किन्तु पुनः पुनः पतति स्म। यदा सा पतति स्म तदा सा रोदिति स्म। किन्तु पुनः चलितुं प्रयतते स्म।

राघवः एतद् दृश्यं पश्यन् एव स्थितः।

एकस्मिन् वर्षे अवर्षणम् अग्रिमे वर्षे महापूरेण सर्वं सस्यं नष्टम्। एकस्मिन् वर्षे संकरितानि बीजानि नैव अङ्कुरितानि। अग्रिमे वर्षे रासायनिक-कीटकनाशकानां पोषकतत्त्वानां च दुष्परिणामः सस्येषु अभवत्। एवं पञ्चवर्षाणि यावत् कृषिकार्ये सः अपयशः प्राप्तवान्। इदानीं कृषिकार्यस्य प्रचालनं कठिनतरम् अभवत्। तस्य ऋणदातारः अपि तं पीडयन्ति स्म।

राघवः असहायताम् अनुभूतवान्। सर्वकारतः अपि सः सम्यक् साहाय्यं न प्राप्तवान्। निराशः सः आत्महत्यां कर्तुम् उद्युक्तः।

तस्य ग्रामतः समुद्रः पञ्चकिलोमीटरपरिमितं दूरे आसीत्। सः समुद्रे उत्प्लुत्य स्वजीवनं

'यद्यपि सा जानाति यत् अहं पतिष्यामि, प्रहारं प्राप्स्यामि तथापि सा पुनः पुनः प्रयतते। मूर्खबालिका! चलितुं सा किमर्थम् उत्सुका इत्येव आश्चर्यस्य विषयः।' इति अनवधानतया सः स्वचिन्तनम् उच्चैः उक्तवान्।

"महोदय, यदि पतनस्य भीत्या सा चलितुं त्यजेत् तर्हि सा कथं चलितुं शक्नुयात्? तस्मिन् एव वयसि प्रयत्नसातत्यं सहनशीलतां च बालकः पठति।" एतद् वचनं श्रुत्वा राघवः परिवृत्य दृष्टवान्।

कश्चन वृद्धः धीवरः तस्य पृष्ठतः स्थितः। तस्य स्कन्धे जालम् आसीत्। राघवः पूर्वं धीवरं न दृष्टवान्।



# लघुबालिका पाठं पाठयति

सीताराम: दरिद्र: कृषक: आसीत्। जलव्यवस्थायुक्तं एकरत्रयपरिमितं तस्य क्षेत्रं स: कृषति स्म। तस्य उत्पादनेन तस्य आजीविका भवति स्म। सर्वकार: सर्वेभ्य: कृषकेभ्य: विनामूल्यं विद्युत् ददाति स्म। किन्तु विनामूल्यं विद्युद्दानं केवलं रात्रौ आसीत्। कस्यांश्चित् रात्रौ सीताराम: क्षेत्राय जलं दातुं यावत् विद्युत्यन्त्रं चालितवान् तावत् विद्युत्प्रवाहस्य आघातेन स: मृत्युं प्राप्नोत्।

अकस्मात् पितु: मृत्युकारणात् गृहनिर्वहणदायित्वं सीतारामस्य पुत्रस्य राघवस्य स्कन्धे आपतितम्। राघव: महाविद्यालये द्वादशकक्ष्यापर्यन्तं शिक्षणं पूर्णं कृतवान् आसीत्। स: अग्रिमं शिक्षणम् इच्छति स्म। तस्य माता तस्य पितु: आकस्मिक-मृत्युकारणात् आघातं प्राप्तवती। तस्य अग्रजा विवाहयोग्या तरुणी। तस्य पितामही अस्वस्था आसीत्। गृहजनानाम् आजीविकाया: दायित्वं राघवे आपतितम्। पिता येभ्य: ऋणानि स्वीकृतवान् तेभ्य: प्रत्यर्पणम् इत्यपि दायित्वं तस्य एव।

राघव: शिक्षणं स्थगितवान्। स: क्षेत्रे कृषिकार्यम् आरब्धवान्। स: एकरपरिमितां भूमिं विक्रीतवान्। तत: प्राप्तेन धनेन ऋणानां प्रत्यर्पणं कृतवान्। स: अवशिष्टे क्षेत्रे कृषिकार्यं प्रारब्धवान्।

राघवस्य कृते कृषिकार्यं नूतन: विषय: आसीत्। तदानीम् एव नैसर्गिक्य: आपत्तय: प्रादुर्भूता:। कृषिकार्यं तस्मै न अरोचत।

तिरुमालश्री

''सत्यं महोदय, यदा लघुबालका: चलितुं प्रयतन्ते तदा तस्मिन् महातत्त्वज्ञानम् दृश्यते। सातत्यपूर्णेन प्रयत्नेन विना वयं यश: न प्राप्नुम:। आपत्तियुक्तं जीवनं यदि वयं त्यजाम: तर्हि वयं किमपि प्राप्तुं न शक्नुम:'' वृद्ध: धीवर: स्मितहास्यं कुर्वन् पुन: उक्तवान्।

राघव: वृद्धस्य वलियुक्तं मुखम् अपश्यत्। तस्य वचनस्य सार्थकतां च अमन्यत।

''पश्यतु तान् कल्लोलान्। सागरकल्लोला: दिवानिशं तीरं प्राप्तुं प्रयतन्ते। किन्तु मध्ये एव कुत्रचित् ते भग्ना: भवन्ति पुन: सागरे विलीना: भवन्ति। किन्तु ते पुन: पुन: अधिकेन वर्धितेन उत्साहेन प्रयतन्ते'' वृद्ध: धीवर: पुन: अवदत्। ''हे युवक, मनुष्यस्य जीवनमपि तथैव अस्ति। विघ्नानां भयेन य: प्रयत्नं त्यजति तस्य जीवनं विकासं न गच्छति। अहं भवते तत्त्वज्ञानं पाठयामि इति मा चिन्तयतु। एतद् जीवनस्य मूलभूतं तत्त्वम्'' इति उक्त्वा धीवर: अगच्छत्।

''एतदेव सत्यम्। लघुबालका: सागरतरङ्गा: अपि अस्मान् पाठयन्ति'' इति जागृति: तस्य मनसि प्रादुर्भूता। ''यदा आपत्तय: मां प्रहरन्ति स्म तदा मम आत्मविश्वास: नष्ट:। अहं पलायनं कर्तुम् इच्छामि स्म। ये मयि आश्रिता: तेषां मम गृहजनानां विचारम् अहं न कृतवान्। अहं स्वार्थी आसम्'' इति राघव: स्वस्य प्रमादं ज्ञात्वा चिन्तितवान्।

राघव: नूतनेन आत्मविश्वासेन गृहं प्रतिनिवृत्त:। आत्महत्याया: विचारं स: अधुना त्यक्तवान्। लघुबालिका तं पाठ पाठितवती। तेन पाठेन राघव: विघ्नान् अपि सोढुम् उद्युक्त:। प्रयत्नसातत्येन आपत्तीनां निवारणं कृत्वा जीवने यश: प्राप्स्यामि इति स: दृढं निश्चयं कृतवान्।





# कावेर्या: उत्पत्ति:

**पु**रा 'शूरपद्मनाभ:' नाम एक: असुर: आसीत्। स: बहु बलवान् दुष्ट: च आसीत्। तस्य दुष्टत्वं सोढ्वा चतुर्दश लोका: भयेन अकम्पन्त। स्वर्गस्था: देवा: अपि भयेन अकम्पन्त।

न केवलं देवा: अपि तु साक्षात् देवेन्द्रस्य स्थिति: अपि तस्य असुरस्य पुरत: दयनीया अभवत्। अत: देवेन्द्र: पृथिवीम् आगत्य एकस्मिन् वने वेत्रवृक्षरुपेण जात:।

केभ्यश्चित् दिनेभ्य: अनन्तरं ग्रीष्म-ऋतु: आगत:। वने सर्वे वृक्षा: शुष्का: अभवन्। किन्तु देवांशस्य कारणेन स: वेत्रवृक्ष: हरित: एव अवशिष्ट:। तद् दृष्ट्वा देवेन्द्र: अचिन्तयत् ''सर्वे वृक्षा: शुष्का: जाता:। केवलम् अहमेव हरित: अवशिष्ट: अस्मि। किम् एतद् अनुचितं नास्ति वा? एतेन मम रहस्यं सहजतया ज्ञातं भवेत्। अधुना यदि अहं मम प्रभावेन गङ्गानदीं पृथिव्याम् आनेष्यामि तर्हि मम रहस्यं ज्ञातं न भवेत् तेन च देवं पूजयितुम् अवसर: अपि प्राप्त: भवेत्''।

एवं निश्चयं कृत्वा देवेन्द्रेण गणेशस्य प्रार्थना कृता। प्रार्थनया प्रसन्न: भूत्वा गणेश: अवातरत्। देवेन्द्र: तस्मै स्वस्य इच्छाम् अश्रावयत्। गणेश: अपि देवेन्द्रस्य इच्छां पूर्णां कर्तुम् ऐच्छत् ध्यानं कृत्वा च अपश्यत्। तेन अगस्त्यऋषे: कमण्डलौ जलं दृष्टम्।

अनुक्षणं गणेश: काकरुपं धृत्वा अगस्त्यऋषे: आश्रमं प्रति उदडीयत। तत्र

लक्ष्मी:



# दानशीलस्य स्वप्नः

**पूर्वं** महाराजः वीरवर्मा अवन्तीदेशं पालयन् आसीत्। तस्य आप्तसाहायकस्थाने योग्यः कश्चन मन्त्री आवश्यकः आसीत्। महाराजस्य पूर्वतनः आप्तसाहायकः जयानन्दः। वृद्धः सः जयानन्दः अस्वस्थः इति कारणतः तत् आप्तसाहायकस्थानं रिक्तम् आसीत्।

जयानन्दः बुद्धिमान् आसीत्। उत्तमरीत्या कार्यनिर्वहणं करोति स्म सः। दूरदृष्टिः अपि तस्मिन् विशेषतः आसीत्। अतः तादृशः एव, नियोजनीयः इति महाराजस्य इच्छा। किन्तु तादृशस्य अन्वेषणं कथम् इति न जानाति सः।

एकस्मिन् दिने राजा प्रधानमन्त्रिणं सुबुद्धिम् आहूय एतं विषयम् उपस्थापितवान्।

एतत् श्रुत्वा सुबुद्धिः महाराजम् उक्तवान्- ''महाराज! देशे ये राजनीतिशास्त्रम्, अर्थशास्त्रं, न्यायशास्त्रं च अभ्यस्तवन्तः तान् आह्वयाम। शास्त्रविषये तेषां परीक्षां करवाम। तेषु यः प्रतिभावान् भवति तस्य चयनं करवाम। अनन्तरम् अस्वस्थस्य जयानन्दस्य अभिप्रायानुसारं कश्चित् आप्तमन्त्रिस्थाने नियोजयाम चेत् उत्तमं भवति'' इति।

एषः एव उत्तमः उपायः इति राजा चिन्तितवान्। मन्त्री सुबुद्धिः शीघ्रातिशीघ्रम् एतस्मिन् विषये आवश्यकाः योग्याः सूचनाः च लेखयित्वा सडिण्डिमघोषं देशे सर्वत्र प्रचारं कृतवान्। एतां वार्तां श्रुत्वा देशस्य सर्वदिग्भ्यः अपि विद्यावन्तः अनेके युवकाः आगतवन्तः। शास्त्रविषये तेषां परीक्षा कृता। परीक्षायां जयः विजयः च उत्तीर्णौ। तौ द्वौ अपि समानौ।

आय्. शर्मा

गत्वा दृष्टं यद् अगस्त्य-ऋषि: तपस्यायां मग्न: अस्ति। काकरुपेण गणेश: कमण्डलो: समीपम् अगच्छत् चञ्च्वा तस्य भङ्गम् अकरोत् च।

तदा अगस्त्यऋषे: कमण्डलो: तद् जलं धारारुपेण पृथिवीं प्रति अवहत्। वहत् जलं तद् वनम् अगच्छत् यत्र देवेन्द्र: वेत्रवृक्षरुपेण स्थित: आसीत् तं वृक्षम् अपि असिञ्चत् च।

केनचित् कालेन अगस्त्यऋषिणा यदा कमण्डलु: दृष्ट: तदा तस्मिन् एक: जलबिन्दु: अपि नासीत्। यदा इतस्तत: दृष्ट: तदा तेन उड्डीयमान: एक: काक: दृष्ट:। ऋषि: तम् अन्वधावत् किन्तु चतुर्दश लोका: धावित्वा अपि स: तं ग्रहितुम् न अशक्नोत्।

अन्ते ऋषिणा दिव्यदृष्ट्या ज्ञातं यत् स: कोऽपि सामान्य: काक: नास्ति। तदा तेन वस्तुस्थिति: ज्ञाता। अगस्त्य-ऋषि: गणेशम् अवदत्, ''हे विघ्नहारिन् देव, भवान् किमर्थम् अटति? भवता लोककल्याणार्थं यद् कार्यं कृतम्, अहं तस्य समर्थनं करोमि। किन्तु अधुना मम समीपे ईशपूजनार्थम् एक: अपि जलबिन्दु: नास्ति। एतद् किमर्थम्?'' एतद् श्रुत्वा एव काकरुपं धारयता गणेशेन स्वस्य चञ्च्वा अगस्त्यऋषे: कमण्डलौ जलं स्थापितम्।

गणेशेन अगस्त्य-ऋषे: कमण्डलो: चोरितं तद् जलं भूमौ पतितं कावेरीनद्या: रुपेण च ऊढम्। तदनन्तरं 'सुब्रह्मण्यस्वामी' अवातरत् लोककष्टकस्य शूरपद्मनाभस्य असुरस्य नाशं च अकरोत्। अत: एव अधुना अपि सुब्रह्मण्यस्वामिन: उत्सवे शूरपद्मनाभस्य एतास्या: कथाया: श्रवणं-श्रावणं च भवति।





अत: सुबुद्धि: तौ जयानन्दसमीपं नीत्वा प्रवृत्तं सर्वम् उक्तवान्।

तत् श्रुत्वा जयानन्द:-''महाराजस्य आप्तमन्त्री य: भवति स: शास्त्रेषु पारङ्गत: भवति चेत् न पर्याप्तम्। क्लिष्टा: समस्या: अपि उपायेन परिहर्तुं समर्थ: भवेत् स:। शास्त्रेषु पारङ्गतयो: एतयो: द्वयोर्मध्ये आप्तमन्त्रिस्थाने स्थातुं क: योग्य: इति अनया अन्तिमपरीक्षया ज्ञायते'' इति उक्त्वा कथं परीक्षा करणीया इति सुबुद्धिं विस्तरेण बोधितवान्।

जयानन्दस्य सूचनानुसारं सुबुद्धि: जयं विजयं च आहूय किञ्चित्कालं वार्तालापं कर्तुम् आरब्धवान्। वार्तालापमध्ये यदा मैत्रीविषय: आगत: तदा सुबुद्धि: वेदनायुक्तस्वरेण उक्तवान्-''सद्य: एव मम स्नेहित: कश्चित् विषादस्य परिणामत: मृत: अभवत्। तं विषयं भवतो: समीपे वदामि। भवद्भ्यामपि तत् श्रोतव्यमेव'' इति। युवकौ तु श्रद्धया शृण्वन्तौ आस्ताम्।

सुबुद्धि: स्वस्नेहितस्य विषये एवम् उक्तवान्-''मम स्नेहितस्य नाम दानशील: इति। वयसा वृद्धस्य तस्य हृदयवेदना अपि आसीत्। एकस्यां रात्रौ निद्रायां दानशील: भयङ्करं स्वप्नं दृष्टवान्। स्वप्ने स: कस्मिंश्चित् अरण्ये अटन् मार्गभ्रष्ट: जात:। सर्वत्र वृक्षा: सस्यानि गुल्मा: च। तन्मध्ये मार्गं ज्ञातुम् अशक्त: दानशील: मध्ये मध्ये स्खलन् कथमपि किञ्चित् अग्रे गत्वा एकं विशालप्रदेशं प्राप्तवान्। आकाशे नक्षत्राणि विद्योतन्ते स्म। तस्मिन् मन्दप्रकाशे दानशील: एकं चतुष्पथं दृष्टवान्। एकेन मार्गेण अग्रे गतवान्। ततोऽपि अग्रे सस्यानि गुल्माश्च बहव: आसन्। अत: मार्ग: एव न दृश्यते स्म। तत्र केचन सिंहा: अटन्ति स्म। एक: सिंह: दानशीलं दृष्ट्वा भयङ्करं गर्जन् तस्य समीपमेव आगन्तुम् उद्युक्त:।

दानशील: भयात् शिलाकण्टकानि अपि अविगणय्य यथा आगतवान् तथैव धावित्वा चतुष्पथं प्राप्तवान्। तत्र कुत्रापि सिंहस्य चिह्नमपि न दृष्टम्। किञ्चित् श्रमपरिहारं कुर्वन् द्वितीयमार्गम् आश्रित्य गन्तुम् आरब्धवान्

दानशीलः। अनतिदूरे एव कश्चन प्रकाशः एतस्य दिशि एव आगच्छन् आसीत्। दानशीलः एकस्य गुल्मस्य पृष्ठतः स्थित्वा प्रकाशं दृष्टवान्। सः प्रदेशः पूर्णतया वल्मीकमयः आसीत्। तेषाम् उपरि कालसर्पाः उपविश्य फणाः चालयन्तः आसन्। फणासु विद्यमानानां मणीनाम् एव प्रकाशः तत्र आसीत्। आगतः प्रकाशः अपि कस्यचन सर्पस्य मणितः एव।

आश्चर्येण पश्यन्तं दानशीलं वल्मीकेषु विद्यमानः कश्चन नागराजसदृशः सर्पः दृष्टवान् एव। सः झटिति फूत्कुर्वन् दानशीलस्य समीपमेव आगतवान्। भीतः दानशीलः वेगेन धावन् पुनरपि चतुष्पथमेव गत्वा स्थितवान्।

अनन्तरं दानशीलः तृतीयं मार्गम् आश्रित्य गतवान्। एवं गच्छन् एकं पर्वतं प्राप्तवान् सः। ततः अग्रे गन्तुं मार्गः न दृश्यते स्म। तत्र सर्वत्र मानवानां कपालानि आस्थीनि च आसन्। ततः प्रतिगन्तुं प्रवृत्तः दानशीलः। तवति काले भयङ्कराकारः राक्षसः विकृतं स्वरं कुर्वन् आगतवान् एव। दानशीलः पुनरपि आक्रन्दनं कुर्वन् धावित्वा चतुष्पथं प्राप्तवान्।

किन्तु राक्षसः अपि हुँकुर्वन् दानशीलम् अनुसृत्य एव आगतवान्। एतत् दृष्ट्वा भीतः दानशीलः चतुर्थं मार्गमाश्रित्य धावितुम् उद्युक्तः। एवं धावन् सः एकं पर्वतम् आरुह्य शिखरपर्यन्तं गतवान्। इतोऽपि अग्रे गन्तुं मार्गः न आसीत्। अपि तु गम्भीरः कन्दरः आसीत्। पृष्ठतः राक्षसः आगच्छन् अस्ति। भीत्या कम्पमानः दानशीलः गभीरं कन्दरं पश्यन्





# विस्मरणशील: मनुष्य:

रामगोविन्दस्य विस्मरणशीलतां ग्रामे सर्वे जानन्ति स्म। तस्य पत्नी सीता तद्विषये विवाहपर्यन्तं किमपि न जानाति स्म।

विवाहोत्तरं कदाचित् धान्यसङ्कलनानन्तरं रामगोविन्द: धान्यगोणी: विक्रयणार्थं नगरं प्रति अनयत्। धान्यं विक्रीय क्रयकर्तृभ्य: धनस्वीकरणं विस्मृत्य एव स: गृहं प्रत्यागच्छत्। सीता निराशया असहाया जाता।

कदाचित् कार्तिकमासे पवित्रं स्नानं कर्तुं रामगोविन्द: नदीम् उपागच्छत्। यत: विस्मरणशीलता आसीदेव इति स: स्ववस्त्रस्य स्थाने कस्याश्चित् शाटिकां कटिं परित: धृत्वा आगत:। सर्वे ग्रामजना: तम् उपाहसन्। सीता अतीव व्याकुला जाता।

रामगोविन्दस्य अनुज: बालाजि: आसीत्। तस्य विवाहतिथि: निश्चिता आसीत्। तस्मिन् काले एव रामगोविन्द: अस्वस्थ: जात:। स: देवं प्रार्थयत यत् 'यदि स: झटिति स्वस्थ: भवेत् तर्हि तिरुपतिम् आगत्य स: शिरोमुण्डनं कारयेत्'। गोविन्दस्य स्वास्थ्यं भ्रातु: विवाहात् दिनचतुष्टयात् पूर्वं सम्यक् अभवत्। रामगोविन्द: स्वप्रार्थनां पूरयितुं तिरुपतिं प्रस्थित:। स: स्वभ्रातरम् बालाजिम् अपि तेन सह अनयत्। तत्र प्राप्य स: स्वप्रार्थनाम् विस्मृत्य तत्स्थाने भ्रातु: शिरोमुण्डनम् सम्यक् पर्यवेक्षितवान्। सर्वे रामगोविन्दं वरस्य आसन्नविवाहे कृताम् अवस्थां दृष्ट्वा तर्जितवन्त:।

सीता स्वपत्यु: विस्मरणशीलत्वं निवारयितुं वैद्यै: सह सन्मन्त्रितवती। तै: निर्दिष्टानि

प्रतापरविशङ्कर:

आसीत्। तदा कम्पनकारणत: पादस्य अध: विद्यमाना शिला स्खलिता अभवत्। दानशील: उच्चै: आक्रन्दनं कुर्वन् कन्दरे पतित:'' इति।

सुबुद्धि: एवम् उक्त्वा जयविजयौ पश्यन् पुन: उक्तवान्-''कीदृश: भयङ्कर: स्वप्न:! हृदयवेदनापीडित: मम स्नेहित: स्वप्नत: जागरणं प्राप्य अनुक्षणं हृदयस्तम्भनेन मृत: अभवत्'' इति।

तदा जय: महता दु:खेन उक्तवान्-''स्वप्ने यत् दृश्यते तस्य शरीरस्य च सम्बन्ध: अस्ति इति मानसशास्त्रात् ज्ञातवान् अस्मि। दानशीलस्य चतुर्वारं प्राणभीति: जाता। प्रथममेव हृदयवेदनया पीड्यमान: आसीत् स:। अनन्तरं तादृशं घोरं स्वप्नं दृष्टवत: तस्य हृदयक्रिया स्थगिता जाता। स: मृत: तदर्थम् मम अतीव दु:खं भवति'' इति।

सुबुद्धि: शिर: चालयन् विजयं दृष्टवान्। विजय: मन्दहासपूर्वकम् उक्तवान्-''क्षम्यताम्, मन्त्रीवर्य, भवता उक्तं सर्वं कल्पितम् एव'' इति।

मन्त्री कोपेन-''कथं कल्पिता कथा इति वदति भवान्? प्रमाणं किमपि अस्ति वा?'' इति पृष्टवान्।

तदा विजय: सविनयम् उक्तवान्-''भवत: स्नेहितस्य दानशीलस्य स्वप्नत: यदा जागरणम् जातं तदा एव स: यदि मृत: स्यात् तर्हि तस्य स्वप्नस्य विचारं भवान् कथं ज्ञातवान् स्यात्? ज्ञातुम् अवकाश: एव नास्ति किल!'' इति।

विजयस्य युक्तियुक्तं चिन्तनं दृष्टवत: सुबुद्धे: महान् सन्तोष: जात:। स: विजयम् अभिनन्द्य तस्मिन् एव दिने तं महाराजस्य आप्तसाहायकत्वेन नियुक्तवान्। योग्यस्य साहायकस्य प्राप्त्या राजा नितरां सन्तुष्ट: अभवत्। योग्यस्य उपायनस्य दानेन सुबुद्धिं सत्कृतवान् स:।



औषधानि सा तस्मै दत्तवती। परं तत् सर्वं व्यर्थम् आसीत्।

मध्याह्ने भोजने किं खादितम् इति सः सायङ्कालपर्यन्तं विस्मरति स्म। ये तं सम्यक् जानन्ति स्म ते तं तथा पृष्ट्वा यदा सः स्मर्तुं प्रयत्नं करोति स्म, तदा परिहसन्ति स्म।

एकदा सीता मातृगृहं गत्वा तत्र पञ्चदिनानि यावत् स्थितवती। भोजनं कृतम् इति विस्मृत्य रामगोविन्दः एकस्मिन् दिने षड्वारं भोजनम् अकरोत्। यदा सीता गृहं प्रत्यागता तदा गृहस्य सर्वं भक्ष्यापनं समाप्तम् आसीत्। तस्मात् दिनात् सीता यत्र कुत्रापि गच्छति स्म तत्र स्वपतिम् अपि नयति स्म।

कदाचित् सीतायाः अग्रजः मानवीरः मेलितुम् आगतः। सः दिनत्रयं स्वभगिन्याः गृहे न्यवसत्। सः गमनात् पूर्वम् नद्यां पवित्रस्नानं कर्तुम् इच्छाम् प्रकटितवान्। रामगोविन्दः स्वश्यालं स्वीकृत्य नदीं गतः। केचन बालाः नदीतीरे क्रीडन्ति स्म यदा तेषां गावः तत्रैव चरन्ति स्म। मानवीरः स्ववस्त्राणि नदीतीरे स्थापयित्वा रामगोविन्दं तानि परिरक्षितुं कथयित्वा स्नातुं नदीं प्रविष्टः। रामगोविन्दस्य सर्वम् अवधानं बालानां क्रीडासु आसीत्। मानवीरः नद्यां तरन् आसीत्। किञ्चित् कालानन्तरं मानवीरं विस्मृत्य रामगोविन्दः गृहं प्रत्यागतः। यदा सीतया मानवीरविषये पृष्टम्



तदा सः पुनः नदीं प्रति धावितः। यावत् रामगोविन्दः तत्र प्रत्यागतः तावत् मानवीरस्य नदीतीरे स्थापितानि वस्त्राणि नष्टानि आसन्। गोपालकाः बालाः अपि तत्र नासन्। वस्त्रैः विना मानवीरः नद्याः बहिः आगन्तुं न शक्नोति स्म। यावत् रामगोविन्दः गृहं गत्वा तस्य कृते वस्त्राणि स्वीकृत्य पुनः न आगतः तावत् सः तत्रैव जले स्थितः आसीत्।

सीता पत्युः विस्मरणशीलेन दुःखिता जाता स्वभ्रात्रे क्षमां च याचितवती। यद्यपि एतावत् सर्वं भवति स्म तथापि रामगोविन्दः स्वविस्मरणशीलेन कदापि बाधितः न भवति स्म।

अथ कदाचित् सः समीपस्थे ग्रामे मेला

अस्ति इति प्रतिवेशिभ्य: अशृणोत्। स: अपि मेलाम् गन्तुम् इच्छति स्म। तस्य पञ्चवर्षीय: पुत्र: अपि मेलाविषये श्रुत्वा तेन सह गन्तुम् ऐच्छत्।

रामगोविन्देन पुत्र: मेलां प्रति नेतव्य: एव अभवत्। सीता रज्जुं स्वपुत्रस्य हस्ते बद्ध्वा तस्या: अपरं पार्श्वं ग्रहीतुं रामगोविन्दाय अयच्छत्। गृहत: प्रस्थानसमये रामगोविन्द: स्वपुत्रं स्कन्धयो: आरूढवान्।

प्रस्थानात् पूर्वं सीता रामगोविन्दम् किमपि मिष्टान्नम् आगमनसमये मेलात: न आनेतव्यम् इति कथितवती। यत: मार्गे नैके वानरा: भवन्ति स्म ये मिष्टान्नार्थं पीडां कारयेयु:। रामगोविन्द: तत् अङ्गीकृतवान्।

पूर्णं दिनं मेलायां यापयित्वा रात्र्यागमे रामगोविन्द: गृहं प्रत्यागत:। सीता द्वारम् उद्घाट्य स्वपतिं दृष्ट्वा उच्चै: आक्रोशितवती।

''तथा उच्चै: न आक्रोशतु। अहं तव पति: अस्मि। केवलं मम वस्त्राणि अतीव मलिनानि सन्ति यत: अहं मेलायां नैकानि आपणानि विलोभनस्थानानि च गतवान्'' इति स्वयमेव विनोदं कृत्वा हसन् एव रामगोविन्द: अवदत्।

सीता महता कष्टेन स्वमुखम् उद्घाट्य अपृच्छत् - ''अवयो: पुत्र: कुत्र अस्ति?'' रामगोविन्द: उदतरत् - ''आवयो: पुत्रं जनसम्मर्दे अन्विष्य श्रान्त: भूत्वा अहं तं गृहम् आनीतवान्'' इति। रज्जो: रिक्तपार्श्वं दूरं कृत्वा स: तस्य स्कन्धयो: भारं स: अध: स्थापितवान्।

तस्मिन्नेव क्षणे तेन उह्यमान: वानर: सकूर्दनं झटिति दूरं धावितवान्। सीता नि:संज्ञा जाता यत: स्वपुत्रं मेलायां विहाय तत्स्थाने स: कश्चित् वानरम् आनीतवान् आसीत्।






# हरितगणेश:

त्रिभ्य: वर्षेभ्य: पूर्वं पर्यावरणसमिति: प्रतिशालं पर्यावरणस्य रक्षणविषये जागरूकतानिर्माणार्थं छात्राणां पर्यावरणगणं निर्मितवती। प्रत्येकं शालाया: पर्यावरणगणे १५ सदस्या: आसन्। प्रतिवर्षं पर्यावरणगणानाम् आन्तरशालेयस्पर्धा: भवन्ति स्म।

प्रताप: नाम कश्चन दशवर्षीय: बाल:। तस्मै एषा योजना अतीव अरोचत। प्रताप: टागोरशालाया: छात्र:। एतस्मिन् वर्षे एतत् पारितोषिकं स्वस्य शालायै जेतव्यम् इति प्रतापस्य मनीषा। स: स्वस्य विचारान् मित्राय सोमेशाय अकथयत्,''अस्मिन् वर्षे अस्माकं छात्रगणस्य सदस्या: प्रथमं पारितोषिकं लब्धुं दृढसङ्कल्पा: सन्ति।''

सोमेश: मित्रस्य स्कन्धे मन्दं चपेटीकां दत्वा तम् अस्मारयत्, ''प्रताप, मम शालाया: काकतिया विद्यालयस्य छात्रगणसदस्यानां क्षमताविषये अन्यथा न चिन्तयतु।'' सोमेशस्य वाक्यं श्रुत्वा प्रताप: किञ्चिदपि हतोत्साह: न जात:। स: अवदत्, ''अद्यैव अस्माकं शिक्षिका एकां कविताम् अपाठयत्।''

सोमेश: अपि उत्सुकतया अवदत्,''यदि भवते अरोचत तर्हि नूनं सा कविता उत्तमा भवेत्। मह्यमपि कथयतु''। ''जना: त्रिधा भवन्ति। ये विघ्नभयेन कार्यस्य आरम्भम् एव न कुर्वते ते खलु नीचा:। मध्यमजना: विघ्नेन आहते सति कार्यम् अर्धमेव त्यजन्ति।

पी. व्ही. शेषरत्नम्




परन्तु ये उत्तमाः भवन्ति ते पुनः पुनः प्रतिहन्यमानाः अपि प्रारब्धं कार्यं न परित्यजन्ति, स्वस्य ध्येयं साध्नुवन्ति एव। इति अस्माकं शिक्षिकया पाठितायाः कवितायाः अर्थः। अहमपि तृतीयं पन्थानम् अनुसरामि इति निश्चयं कृतवान्'' इति अवदत् प्रतापः।

अचिरादेव तद्दिनं समायातं परिसरे विद्यमानानां विभिन्नशालानां छात्राः पर्यावरणदिनं सम्पादयितुं सम्मिलिताः। कार्यक्रमस्य प्रमुखातिथिः तस्य विभागस्य महापालिका-आयुक्तः आसीत्। ''अद्य वयं सर्वे अस्मिन् शुभदिवसे छात्रगणसदस्यानाम् अभिनन्दनार्थं समागताः। एतैः छात्रैः पर्यावरणरक्षणविषये संवर्धनविषये च महत् योगदानं कृतमस्ति। टागोरशालायाः छात्रगणस्य सदस्यं प्रतापम् अहं मञ्चम् आगन्तुं निमन्त्रयामि। सः आगत्य प्रथमं पारितोषिकं स्वीकरोतु।'' एतां घोषणां श्रुत्वा सर्वैः आनन्देन करताडनं कृतम्।

''अत्र पश्यन्तु, एनं हरितं गणेशम्। प्रतापः तस्य गणसदस्याः च हरितगणेशस्य निर्माणार्थं विशेषतया अभिनन्दनार्हाः। हरितगणेशः केवलं मृत्तिकानिर्मितः इति तस्य वैशिष्ट्यं न। अपि तु तत्र उपयुक्ताः वर्णाः अपि नैसर्गिकाः। यथा वर्णलेपनार्थम् प्रयुक्तः हरितवर्णः निम्बवृक्षस्य पर्णेभ्यः निष्पीडितः आसीत्। गणेशप्रतिमायाः उपरि विद्यमानं छत्रमपि वंशनिर्मितम्। गणेशचतुर्थ्याः पूर्वं दिनद्वयम् एताः मूर्तयः विक्रयणार्थम् उपलब्धाः आसन्। एताः प्रतिमाः दृष्ट्वा अहम् अतीव प्रभावितः। यतः यदा एताः मूर्तयः उत्सवस्य अन्ते सरसि अथवा पल्वलजले निमज्जिताः भवन्ति तदा ताः जलप्रदूषणकारणं न भविष्यन्ति। प्रत्युत निम्बपर्णरसकारणात् जलं कीटकमुक्तं भविष्यति। तथा च अतीव अल्पमूल्येन एतासां मूर्तीनां विक्रयः क्रीयते स्म। प्रायः द्विशतं मूर्तयः विक्रयणार्थम् आसन्। परन्तु केवलम् अर्धघण्टाभ्यन्तरे ताः सर्वाः प्रतिमाः विक्रीताः। अहम् एतं बालकम् अत्र आह्वयम् अपृच्छं च

किमर्थं सः अल्पमूल्येन प्रतिमानां विक्रयणं करोति इति। अग्रे किम् अभवत् इति प्रतापः स्वयमेव वदिष्यति'' इति मन्दं हसन् अवदत् महापालिका-आयुक्तः।

प्रतापः विनम्रतया अभिवादनं कृतवान्। सः अवदत्,''प्रतिवर्षं मया निरीक्षणं कृतं यद् सरसि गणेशविसर्जनानन्तरं जलं कलूषितं भवति तेन दुर्गन्धः जायते। मूर्तीनां वर्णलेपनार्थं प्रयुक्ताः कृत्रिमवर्णाः विषमयाः भवन्ति। तेन जले विद्यमानानां मत्स्यानां जीवितहानिः महता प्रमाणेन भवति। तद् दृष्ट्वा मम मनः अदूयत। अहम् आयुक्तमहोदयम् अपि अवदं यद् तदा एव पर्यावरणार्थम् अहानिकारकाः प्रतिमाः निर्मातव्याः इति मया निर्णीतम् अस्ति। मम शालायाः छात्रगणसदस्यानां साहाय्येन एव एतत् कार्यमहं निरवर्तयम्। पर्यावरणरक्षणाय प्रेरितः अस्माकं गणः स्थानिक-सरसः अपि स्वच्छताम् अकरोत्। विसर्जनानन्तरं द्वितीये एव दिने सरसः शुष्कपर्णानि फलानि अस्माकं गणेन चितानि। शालायाः पृष्ठभागे प्राङ्गणे गर्तं कृत्वा तत्र सर्वम् अवकरं स्थापयित्वा शालायाः उद्यानस्य कृते नैसर्गिकं खादम् अकुर्म। अनन्तरं सः गर्तः सम्यक्तया पिहितः। अस्माकं कुटुम्बजनैः अपि गणेशोत्सवप्रसङ्गे हरितगणेशमूर्तिः एव पूजिताः। तेन वयं सर्वे अपि अतीव सन्तुष्टाः। काले काले योग्यसूचनाः कृत्वा हरितगणेशनिर्माणस्य प्रकल्पः सफलीकृतः अतः अस्माकं हस्तकलाशिक्षकाय मनःपूर्वान् धन्यवादान् वितरामि।''

अनन्तरं कार्यक्रमस्य अन्ते महापालिका-आयुक्तात् प्रतापः रजतचषकं पारितोषिकरूपेण प्राप्तवान्। पुनरेकवारं सर्वे करताडनं कृत्वा प्रतापम् अभ्यनन्दन्।





# शिथिलालय: - १८

*(नागमल्ल्या: अपहरणकर्ता शिथिलालयार्चकेण तस्या: मुक्त्यर्थं तालपत्राणां समर्पणस्य समय: उक्त:। शिवाल: तत् अङ्गीकृतवान्। चोराणां गुप्तनिवासस्थानं ज्ञात्वा तत: प्रत्यागच्छत: शिखिमुखिन: पदरवं श्रुत्वा कुन्तहस्त: सन् शबरगृध्र: तम् अभिधावितुं सिध्द:। ततस्तत:...)*

हस्ते कुन्तं धृत्वा अग्रे सरन्तं शबरगृध्रं दृष्ट्वा शिखिमुखी सपद्येव स्वरक्षणतन्त्रं निरचिनोत्। यदि स: ऐच्छत् चेत् शबरगृध्रं पृष्ठत: गुप्ततया आक्रम्य तं शिरसि प्रहृत्य च हन्तुम् अशक्ष्यत्। परं तेन अर्चकस्य अनुयायिन: 'अस्माकं गुप्तस्थानं शत्रु: ज्ञातवान्' इति अशङ्किष्यन्त। अस्यां परिस्थितौ अर्चक: नागमल्लीम् अन्यत्र अनेष्यत् ताम् अहनिष्यदपि। नागमल्ल्या: रक्षणं तु आद्यं कर्तव्यम्।

इत्थं सर्वमपि समालोच्य यथा शबरगृध्रेण दृष्ट: न स्यात् तथा तत: पलायितुं शिखिमुखी तन्त्रमेकम् अरचयत्। गुल्मान्तरे आत्मानं गोपयन् स: तस्मात् गुल्मात् समीपस्थे गुल्मे वन्यप्राणी इव उत्प्लुत्य चित्रक: इव गर्जन् अग्रेऽसरत्। तद्गर्जनं श्रुत्वा शबरगृध्र: भयभीत: सन् तत्रैव अतिष्ठत्। एकैकं पदं पृष्ठत: निधाय कम्पमानेन स्वरेण किञ्चित् आत्मगतम् अवदत्, ''अरे, एषस्तु चित्रको वर्तते। एनमहं मनुष्यं भावितवान्। आत्मरक्षणार्थं मया इत:

दासरि सुब्रह्मण्यम्

# चातुर्यम्

कश्चन बसन्तराय: नाम व्यापारी रामभद्रपुरनगरे निबसति स्म। यदा स: वृद्ध: अभवत् तदा पुत्रौ आहूय उक्तवान् ''अस्माकं व्यापारं युवाम् अग्रे अनुवर्तनं कृत्वा सम्पन्नौ भविष्यथ'' इति अहम् इच्छामि। तदनन्तरं स: तौ उक्तवान्,''असरलं मा भवताम्। चातुर्येण व्यापारं कृत्वा उन्नतिं साध्नुयाताम्।'' तस्य द्वौ पुत्रौ स्वस्य व्यवसायस्य प्रारम्भं कृतवन्तौ। किञ्चित् कालानन्तरं पिता तयो: व्यवसायस्य विषये पृष्टवान्। ज्यायस: पुत्रस्य व्यवसाय: कथञ्चित् प्राचलत्। किन्तु कनीयस: पुत्रस्य व्यवसाय: सफल: अभवत्।

एकदा बसन्तराय: तस्य पुत्रौ आह्वयति स्म। स: तयो: व्यवसायस्य विषये पृष्टवान्। तस्य अग्रज: पुत्र: उत्साहेन विना उक्तवान्,''अहं स्वस्य व्यवसायं तव उपदेशानुसारम् एव कृतवान्। अहम् असरलम् अपि न अभवम्। किन्तु केवलं विरला: जना: एव मम बस्तूनि क्रेतुम् आगतवन्त:। तदनन्तरम् अनुज: पुत्र: उत्साहेन उक्तवान्,''अहं क्रेतु: मानसिकताम् अवगम्य एव व्यवसायं करोमि। अहम् अन्यत्र सहजतया अनुपलब्धानि बस्तूनि अल्पमूल्येन विक्रीणे। तेन भवत: उपदेशानुसारं व्यवहारे असरलता अपि न भवति। यद्यपि तत्र धनस्य हानि: भवति तथापि अन्येषां वस्तूनां विक्रयं कृत्वा अहं लाभं तत्र अलभे। एतत् मम व्यवसायस्य रहस्यं वर्तते'' इति।

बसन्तराय: अनुजस्य पुत्रस्य चातुर्यं दृष्ट्वा आनन्दित: अभवत्। स: कनीयसे पुत्राय स्वस्य खण्डविक्रयव्यवसायं प्रदत्तवान् तथा तेन ज्यायसे पुत्राय च स्तूपविक्रयाधिकार: प्रदत्त:।

*- भीमेश्वरराव:*





प्राहरम्। क्षतिं प्राप्य सः हतधैर्यः सन् पलायितः''।

''बाढम्! धैर्ये त्वम् अस्मदुपमः एव। आगच्छ! अर्चकवरः त्वां कस्मिंश्चित् कठिने प्राणभयकारिणि कार्ये नियोक्तुम् इच्छति'' चोरयोः अन्यतरः अवदत्।

''प्राणभयकारि कार्यम्? हुं, न कस्मादपि मे भयमिह। यदि अर्चकवरः आदिशति चेत् आकाशे इदानीमेव उड्डये। मानवशरीरे स्थितः गृध्रोऽहम्। न जानीथः किम्?'' शबरगृध्रः अकथयत।

''अप्येतत् आवां न जानीवः? अज्ञाः एव त्वां विकत्थनशीलं भावयन्ति। अर्चकवरस्य मन्त्रशक्तिं तु वयं जानीमहे। त्वं तु तस्य प्रियशिष्योऽसि'' अन्यः चोरः अवदत्।

''अरे, किमिदं निरर्गलं प्रलपथ यूयम्? दिष्ट्या चित्रकः शबरगृध्रं नाखादत्। एषः तु मदमत्तः इति मे भाति। शबरगृध्र! तूष्णीं तिष्ठ त्वम्!'' अर्चकः तं क्रोधेन अतर्जयत्।

शबरगृध्रं वञ्चयित्वा शिखिमुखी वनं पलायितः। उल्मुकप्रकाशं दृष्ट्वा सः पर्वतमूले स्थितम् उटजम् अभ्यजानात्। तम् उटजम् आसाद्य तेन तत्र शिवालः लङ्कुसिंहश्च दृष्टौ। नागमल्ल्याः बन्दिवासस्य वार्तां तौ श्रावयित्वा 'यदि कोलाहलं विना शिथिलालयार्चकस्य उटजे आक्रमणं कुर्मः चेत् इदानीमेव नागमल्लीं

पलायनं कर्तव्यम्''।

शिखिमुखी लीलया शबरगृध्रम् अवञ्चयत्। तेन प्रसन्नः भूत्वा शिखिमुखी इतोऽपि उच्चैः गर्जन् वने पलायितः। उटजात् बहिः चित्रकस्य गर्जनं श्रुत्वा अर्चकः शबरगृध्रस्य साहाय्यार्थं चोरौ अप्रेषयत्।

तौ द्वौ खड्गौ गृहीत्वा शबरगृध्रस्य समीपम् आगत्य अपृच्छतां, ''चित्रकः कुत्र अस्ति? शीघ्रं कथय! तं हन्मि''!

भीतिग्रस्तः शबरगृध्रः तयोः आगतयोः पुनरपि स्वस्थो भूत्वा उच्चैः अहसत् अवदच्च,''किं चित्रकः सुरक्षितः एव मम हस्तात् पलायितः इति मन्येथे? सः मां प्रताडयितुम् ऐच्छत्। तावदेव अहं तं कुन्तेन

मोचयित्वा अर्चकमपि बन्दिग्राहं कर्तुं शक्नुम:' इति शिखिमुखी असूचयत्।

शिवाल: शबरनेत्रा लट्ठुसिंहेन सह मन्त्रयित्वा स्वपुत्रस्य कथनानुगुणम् अनुक्षणम् आक्रमणं कर्तुं निश्चितवान्। 'नागमल्ल्या: रक्षणार्थं शिवालेन अर्चकाय दातुं तालपत्राणां स्यूत: अश्वत्थवृक्षे लम्बनीय: अस्ति' इति शिखिमुखी शिवालमुखात् अशृणोत्। अश्वत्थवृक्षसमीपं सावधानतया रक्षकरूपेण स्थातुं स: शबरद्वयम् अप्रेषयत्।

तदनन्तरं दशभि: धैर्यवद्भि: शबरयुवकै: विक्रमकेसरिणा च सह शिखिमुखी शीघ्रं शिथिलालयार्चकस्य उटजं प्रति प्रातिष्ठत। अर्धघण्टाभ्यन्तरे यदा ते उटजसमीपम् आगता: तदा तै: दृष्टं यत् उटजात् बहि: कश्चन चोर: रक्षकरूपेण तिष्ठति। तस्य निर्जनोटजस्य वातायनद्वारा उल्मुकप्रकाश: बहिर्भागेऽपि प्रसृत: दृश्यते स्म।

तं रक्षकं दृष्ट्वा शिखिमुखी अचिन्तयत् यत् 'प्राय: आगामिनीं विपदं विज्ञायैव अर्चक: एनम् अत्र योजितवान् अस्ति' इति। अर्चकस्तु कुटिलबुद्धि:। प्राय: स: नागमल्लीम् इत: नीत्वा अन्यत्र गोपितवान् स्यात् इति भीतिं स: अन्वभवत्। यथा कथञ्चित् उटजस्तु आक्रमणीय: इति स: निरचिनोत्। शिखिमुखी स्वयोजनां विक्रमकेसरिणे अकथयत्। रक्षक:



यदि शत्र्वागमनम् अर्चकं सूचयति चेत् उटजस्था: जना: पलायनं कुर्यु:। अत: रक्षक: तथा हन्तव्य: यथा स: शब्दमेकमपि अनुच्चार्य मरणं प्राप्नुयात्।

शिखिमुखी स्वानुचरान् उटजात् स्वल्पमेव दूरम् अस्थापयत्। गुल्मेषु आत्मानं गोपयन् भूमौ सर्पन् च स: रक्षकस्य पृष्ठभागं गत्वा कुन्तदण्डेन तं मस्तके प्राहरत्। यदा रक्षक: नि:संज्ञ: सन् अध: अपतत् तदा तम् आक्रोशात् निवारयितुं शिखिमुखी तस्य कण्ठं धर्तुं प्रायतत। परं रक्षक: पतन्नपि वेदनया उच्चै: आक्रोशत्।

रक्षकस्य आक्रोशं श्रुत्वा 'विपत् समागता' इति अर्चकेण अनुमितम्। स:

शबरगृध्रम् अवदत्, ''अरे गृध्र! शृणु! आवाभ्याम् इत: पलायनं कर्तव्यम्। माम् अनुसर!'' इत्युक्त्वा अर्चक: उटजस्य पृष्ठद्वारमुद्घाट्य वने पलायित:। शबरगृध्रोऽपि तम् अन्वसरत्।

रक्षकस्य आक्रोशेन सर्वाऽपि योजना विफला अभवत् इति शिखिमुखी अजानात्। उटजस्थानां जनानाम् उटजात् बहिर्गमनं रोद्धुं स: स्वानुचरान् उटजं परित: स्थातुम् आदिशत्। विक्रमकेसरी शबरयुवकाश्च आदिष्टम् आचरन्। शिखिमुखी उटजस्य मुखद्वारेण विक्रमकेसरी च पृष्ठद्वारेण खड्गपाणी भूत्वा प्रविशन्तौ उच्चै: अगर्जताम्,''सर्वेऽपि यूयं शस्त्राणि त्यजत, नो चेत् वृथैव मरणं प्राप्नुथ!''

उत्पीठिकायाम् उपविष्टा नागमल्ली आश्चर्येण तौ अपश्यत् अवदच्च, ''साधु! अहो बुद्धिचातुर्यं भवतो:! यम् अर्चकं ग्रहीतुम् ऐच्छतं स: तु शबरगृध्रेण सह इदमिदानीमेव इत: पलायित:। पश्यतम्, एते त्रय: तस्य अनुचरा: मद्यं पीत्वा मत्त: सन्त: निद्रायां रता:। भूकम्पे जातेऽपि एते इत: न पलायेयु:।''

शिखिमुखी नागमल्ल्या: समीपं गत्वा मौनेन तस्या: बन्धोद्घाटनम् अकरोत्। विक्रमकेसरी शिखिमुखिनम् अपृच्छत्,



''शिखिन्, अर्चकम् अनुगच्छाम किम्? स: पुनरेकवारम् अस्मान् वञ्चयित्वा पलायित:।

कदाचित् तदपि दिनम् उदेति, यस्मिन् वयं तं बन्दिनं कर्तुं शक्नुम:। अधुना अस्मिन् निबिडे अरण्ये मन्दज्योत्स्नायां च तं कथम् अन्वेष्टुं शक्नुम:? इदानीम् अर्चकस्य अनुगमनेन केवलं वृथा कष्टमेव अनुभूयेत। यदि शबरनेत्रे लङ्कुसिंहाय तस्य कन्यां प्रत्यर्पयाम: चेत् आवां दायित्वात् मुक्तौ भवेव। तदनन्तरम् आवां तव पितामहविषये ज्ञातुम् अर्चकस्य रहस्यं च ज्ञातुं सुखेन ब्रह्मपुत्रनदप्रदेशं गन्तुं शक्नुव:'' शिखिमुखी विक्रमकेसरिण: समञ्जनम् अकरोत्।

नागमल्ल्या: बन्धनेषु दूरीकृतेषु सा



उत्थातुम् ऐच्छत्। परं बन्धनात् तस्या: शरीरे रक्ताभिसरणे बाधा उत्पन्ना। अत: सा चलितुं नाशक्नोत्। उत्पीठिकायाम् उपविश्य सा अवदत्, ''एष: शबरयुवक: अर्चकस्य चातुर्यम् अवगन्तुम् अद्यापि नाशक्नोत्। युष्माकं गमनात्पूर्वमेव स: अर्चक: ब्रह्मपुत्रप्रदेशस्थं शिथिलालयं प्राप्नुयात्।''

''तत्स्थानं प्राप्तुं सर्वं ज्ञानं, मार्गचिह्नानि, मानचित्रं च अस्मत्समीपं वर्तन्ते। त्वं वृथैव चिन्तां मा कृथा:। अहं सर्वामपि योजनां पूर्वमेव अचिन्तयम्। तान् मार्गान् ज्ञातुमेव अर्चक: भूरि प्रायतत। परम् अस्मिन् जन्मनि तु स: तानि तालपत्राणि प्राप्तुं न शक्नोति'' शिखिमुखी अवदत्।

तावदेव उटजस्य कोणे निद्रारतासु चोरेषु अन्यतम: जृम्भमाण: नेत्रे उदघाटयत्। पुरत: शिखिमुख्यादीन् दृष्ट्वा भयेन कम्पमान: स: सहचरान् जागरयितुम् ऐच्छत्। परं ते न जागृता:। शिखिमुखी तं कुन्तदण्डेन मस्तके ताडयित्वा अवदत्, ''उत्तिष्ठत, युष्माकं स्वामी तु पलायित:। वयं युष्मान् अश्वत्थवृक्षे लम्बयित्वा हन्म:।''

अन्यौ द्वावपि चोरौ शिखिमुखिनं दृष्ट्वा भीतौ। शिखिमुखी पुनरपि तान् प्राणभयं दर्शयित्वा अतर्जयत्। त्रय: अपि चोरा: तस्य पादयो: पतित्वा दयायाचनाम् अकुर्वन्, ''स्वामिन्, तेन दुष्टार्चकेण दत्तं सर्वमपि धनं भवते दद्म:। अस्मान् रक्षतु कृपया।''

''दर्शयत तेन कियद्धनं दत्तमस्ति इति?'' शिखी अपृच्छत्।

चोरास्तु परस्परमुखम् अपश्यन् कस्यांश्चन ऊहायां रताश्च अभवन्। तत् दृष्ट्वा शिखिमुखी अवदत्, ''चतुर्थ: चोर: कुत्र वर्तते इति ज्ञातुम् इच्छथ खलु? तस्मिन् आगते एव धनं गुप्तस्थानात् निष्कासयितुं शक्यते किम्? परं स: तु अधुना नरकं यात: स्यात्। तस्य कृते दत्तं भागमपि यूयं युष्मास्वैव वितरत तेन च कुत्रचित् कृषिक्षेत्रं क्रीत्वा साधुजीवनं यापयत। पुनरपि यदि युष्माभि: चौर्यम्

स्वेच्छया तं हन्तुं शक्नोषि।''

शिवालस्य वचनं श्रुत्वा सर्वेऽपि अहसन्। ततः परं सूर्योदये सत्येव सर्वे जनाः लड्डुसिंहस्य शबरालयं गताः। तत्र अहर्निशं सपीत्यां मनोरञ्जने च सानन्दं कालं यापयित्वा अन्येद्युः शिवालः स्वपक्कणं प्रातिष्ठत। तदा नागमल्ली शिखिमुखिनं किञ्चिद्दूरं वृक्षस्य पृष्ठतः आहूय रहसि अवदत्,''यः अर्चकः मम हस्तपादं बद्ध्वा माम् अपीडयत् तस्य शिखाम् अहम् इच्छामि।''

''यदि सः पुनरपि कुत्रचित् दृश्यते चेत् तस्य शिरः छित्वा तुभ्यं समर्पयेयम् इति प्रतिजानेऽहम्। परं अस्माकं प्रत्यागमनार्थं कियान् समयः अपेक्षितः इत्येतत् तु अहं न जानामि। अत्रान्तरे त्वं कस्यस्विद् अन्यस्य शबरस्य वधूः भविष्यसि चेत् तदानीमपि तवानुनयं कुर्वन्तं मां सः कुन्तेन प्रहरेदपि'' शिखिमुखी अवदत्।

तस्य तद्वचनं श्रुत्वा नागमल्ली लज्जया क्रोधेन च अकम्पत। सा मस्तकम् अवनमय्य वेपमानेन स्वरेण अगदत्,''नान्यः कोऽपि शबरयुवकः मां परिणेतुम् अर्हति!''

''तन्नाम... तव मन्तव्यं नावगच्छामि'' इति वदन् शिखिमुखी निर्व्याजतया नागमल्ल्यां दृष्टिं प्रासारयत्।

नागमल्ली किमपि वक्तुम् उद्युक्ता तावदेव शिवालस्य शब्दः श्रुतः, ''सर्वेऽपि जनाः सिद्धाः भवन्तु। शिखी कुत्रास्ति?''

नागमल्ली सपद्येव स्वगृहं प्रति पलायत। रक्तशुनकः भषन् शिखिमुखीसमीपम् आगतः। शिखिमुखी तं शुनकं लालयन् नागमल्ल्याः वचनस्य भावं ज्ञातुं प्रयतमानः पितरम् अन्वसरत्।

***(अनुवर्तते)***





आचर्यते तच्च यदि मया ज्ञायते चेत् सनिश्चयं मरणं प्राप्नुथ।''

शिखिमुखिना सह नागमल्ली, विक्रमकेसरी अन्ये च अनुचरा: उटजात् बहिरायाता:। तदा विक्रमकेसरी शिखिमुखिनम् अवदत्, ''शिखिन्, अर्चकस्य चोराणां च निवासस्थानभूतस्य एतस्य उटजस्य अस्तित्वं मह्यं न रोचते। ते चोरा: पुनरपि अत्र आगत्य चौर्ये रता: स्यु:। एनम् उटजं ज्वालयित्वा भूमिसात् कुर्म:। एतदेव योग्यमिति मन्ये।''

शिखिमुखी शिर: चालयित्वा अवदत्,''यथा तवेच्छा।'' विक्रमकेसरी उटजं प्राविशत्। तत: एकम् ज्वलदुल्मुकम् आनयत्। उटजं सर्वतोऽपि प्राज्वालयत्। सपद्येव उटज: अग्निसात् अभूत्। तदा शिखिमुखी तस्य अनुचराश्च सानन्दं करताडनम् अकुर्वन् तत: प्रातिष्ठन्त च। त्रय: चोरा: उटजे विद्यमानानि वस्तूनि भाण्डानि च शीघ्रं तत: निष्कासयितुं प्रायतन्त।

पर्वतमूलस्थम् उटजं प्राप्य शिखिमुखिन: दलं शिवालेन लट्ठुसिंहेन चामिलत्। लट्ठुसिंह: तस्य एकाकिनीम् अपहृतां दुहितरं पुन: प्राप्य यम् आनन्दम् अन्वभवत् स: तु वर्णनातीत: एव। स: स्वकन्यां प्रेम्णा परिष्वज्य तां लालयन् अवदत्,''मया चिन्तितं यत् स: नीचार्चक: त्वाम् अपहृत्य उदीचीं पलायित:। दिष्ट्या तस्य पाशात् मुक्ता त्वम्। यदि तं खलार्चकं गृहीत्वा नृशंसतया न हनिष्यामि चेत् स्वनामत्यागं करिष्यामि।''

तच्छ्रुत्वा स्मयमान: शिवाल: अवदत्, ''ईदृशीं प्रतिज्ञां कृत्वा तां पूर्णतां नेतुं सम्प्रति: न समर्था: वयम्। जरया क्षीयमाणा: वयम्। शिखिमुखी विक्रमकेसरी च प्रथमं शूरसेनदेशं गत्वा विक्रमकेसरिण: पित्रा सह मन्त्रं करिष्यत:। तत: प्राय: ब्रह्मपुत्रनदप्रदेशं गमिष्यत:। यदि स: दुष्टार्चक: तत्र तयो: दृष्टिपथं यास्यति तर्हि तौ तं गृहीत्वा तस्य पादौ हस्तौ च बद्ध्वा तुभ्यं समर्पयेयाताम्। तदा त्वं



# स्वातन्त्र्यकलिका

**का**लोऽयम् आसीत् महत: विक्रमस्य राणाप्रतापसिंहराजस्य शासनकालस्य। तदा बादशाह: अकबर: भारतस्य सम्राट् आसीत्। सर्वाण्यपि सामन्तराज्यानि तस्याधीनानि अभवन्। केवलं राणाप्रतापसिंह: एव अकबरराजस्य पुरत: शिर: नावनमयत्। तेन अकबर: क्रोधाविष्ट: जात: आसीत्। तथा प्रतापसिंहोऽपि स्वनिर्णयात् न व्यरमत्।

प्रतापसिंहस्य इदं स्वातन्त्रप्रेम अकबर: सोढुं न शक्तवान्। नैकविधप्रकारेण स: प्रतापसिंहं पीडयितुम् आरब्धवान्। तथापि प्रतापसिंह: न विचलित:। क्रोधाग्निना ज्वलता बादशाहेन निश्चय: कृत: यत् 'येन केनापि प्रकारेण प्रतापसिंह: वशीकर्तव्य:।' तदनु अकबरेण आचरितया हिंसया प्रतापसिंहस्य मनसि स्थित: क्रोधस्य स्फुलिङ्ग: वनाग्नि: इव प्रसृत:। अन्ततो गत्वा अकबरस्य विरोधकारणात् प्रतापसिंहेन प्रासादं त्यक्त्वा वने निवास: करणीय: अभवत्।

यदि प्रतापसिंह: एकाकी एव अभविष्यत् तर्हि तस्य तथा प्राय: न कापि चिन्ता। किन्तु प्रतापसिंहेन सह तस्य भार्या पुत्रकन्ये च दु:खमेतत् सहन्ते स्म। अधुना प्रतापसिंहस्य पुरत: महती विपदेव आपतिता यत् महत्वाकाङ्क्षिण: अकबरस्य किङ्कर: भूत्वा पारतन्त्र्ये जीवनं यापनीयम् उत अटव्याम् अटन् स्वातन्त्र्यम् उपभोक्तव्यम्' इति। किन्तु स: द्वितीयमेव पर्यायं चितवान्। न केवलं

**एम्.एस्.शास्त्री**



प्रतापसिंहाय अपि तु तस्य पत्न्यै सुगुणायै, एकादशवर्षीयायै कन्यायै चम्पावत्यै तथा चतुर्वर्षीयाय पुत्राय अपि तस्य अयं निर्णय: नितराम् अरोचत। तस्य कन्यापुत्रौ पुरातनं सर्वं सुखमयं जीवनं विस्मृत्य वने खेलत: स्म। चम्पावती पुष्पमालां गुम्फित्वा अनुजस्य कण्ठे निधाय आनन्दिता भवति स्म। एकस्मिन् दिने क्षुधार्त: स: पुत्र: रोदनमारभत। तद् दृष्ट्वा चम्पावती उक्तवती,''रे जात, किमर्थं रोदिषि ?''। तं हस्ताभ्याम् उन्नीय अन्त: च नीतवती सा।

महाराणा-प्रताप: पत्न्या सह जीर्णशीर्णवस्त्रै: म्लानमुखेन उपविष्ट: आसीत्। एकवारं दीर्घं निश्वस्य स: उक्तवान्,''प्रिये, ज्ञात: खलु त्वया एष: दैवदुर्विलास: ? एक: कश्चन ब्राह्मण: अतिथिरूपेण अस्मद्गेहं प्राप्त: आसीत्। किन्तु स: अद्य रिक्तहस्त: एव प्रतिगत:। मम जीवने प्रथमोऽयं दुष्ट: प्रसङ्ग:।

राजस्थानराज्यस्य किरिटमिव शोभायमानस्य तथा चितौडराजवंशस्य कृते लाञ्छनास्पद: आसीत् ननु प्रसङ्गोऽयम्। एवं राजवंशस्य प्रतिष्ठां नाशयित्वा किमर्थं कथं वा अहं जीवेयम्?'' एवमुक्त्वा पुनरेकवारं तेन दीर्घं नि:श्वसितम्।

सुगुणया पत्यु: मन: सान्त्वयितुं महान् यत्न: कृत:। तेन अन्ततो गत्वा प्रतापसिंह: किञ्चिद् वा नि:श्वस्त: जात:। ''किन्तु एतावत् पर्यन्तं मम तावत् दु:खं जातं, नाहं तावन्तं कष्टं वा अनुभूतवान्। किञ्चिद्मात्रं भोजनं प्राप्तुं मम स्वर्णं, मम धनं सर्वमपि नष्टमभूत् तथापि अहम् अविचलित: आसम्। किन्तु...... किन्तु..... अद्य यतिवर्य: मम गृहात् रिक्तोदर: एव निर्गत:। एतां वेदनाम् , अपमाननमिदं सर्वथा न सोढुं शक्नोमि।'' इदमुक्त्वा प्रतापसिंह: मूर्च्छित: जात:।

तावता एव अनुजं स्वीकृत्य चम्पावती पितु: समीपम् आगतवती उक्तवती च, ''तात, अलं चिन्तया। 'स: ब्राह्मणवर्य: रिक्तहस्त: गत:' इति यद् भवता चिन्त्यते तथा न भवेदेव। स: तु स्नातुं गत: अस्ति। स: पुनरपि



प्रत्यागच्छेत्। तस्य खानपानादि व्यवस्थां कृत्वा सन्तोषेण स: इत: गच्छेत् इति मम दायित्वमस्ति अधुना।'' प्रतापसिंह: तु आश्चर्यचकित:। शीघ्रतया तेन पृष्टम्,''दुहित:, एवं तर्हि सङ्कटम् एव नष्टम्। पापमुक्तो भवेयम्। साधु....साधु! किन्तु त्वया स: विप्र: कथं वा तृप्तीक्रियेत ?''

''तात, दिनद्वयं यावत् मम भोजने परिवेशिता रोटिका तथैव स्थापिता अस्ति।

तां रोटिकाम् एव अहं तस्मै दास्यामि। तस्य कृते किञ्चित् शाकमपि मया सिद्धं कृतमस्ति। का चिन्ता अधुना ?'' तया उत्तरितम्। प्रतापसिंहस्य नयने अश्रूपूर्णे सञ्जाते।

स्नानादि समाप्य ब्राह्मण: आगत:। तस्य कृते उपवेष्टुं चम्पावत्या किञ्चन आसनं रचितमासीत्। तस्मिन् आगते सति चम्पावत्या रोटिका परिवेशिता। प्रसन्नमनसा ब्राह्मण: भोजनं कुर्वन् आसीत्। चम्पावती उक्तवती,''महाराज, अधुना तु वयं वनवासिन: स्म। अत: इतोऽपि अधिकं किमपि सिद्धं कर्तुं न शक्तवन्त:।''

''बालिके, न चिन्तय तथा। एतादृशम् अमृतपूर्णं भोजनं मम जीवने पूर्वं कदापि मया नास्वादितम्। सदैव आनन्दिता भव।'' एवम् आशीर्वचनम् उक्त्वा ब्राह्मण: निर्गत:। वृत्तमेनं पित्रे श्रावयितुं सा अन्त: गता किन्तु अनशनात् दुर्बला सा भूमौ पतिता। तस्या: मुखात् शब्दमात्रमपि न निस्सृतम्।

प्रतापसिंह: आगत्य दृष्टवान्, सुगुणा अपि चम्पावत्या: समीपे एव उपविष्टा आसीत्। प्राणप्रियां पुत्रीम् एतादृश्याम् अवस्थायां दृष्ट्वा तस्य मस्तकं भ्रमितमिव। स: उक्तवान्,''कन्ये, अकबरबादशाह: सन्धिं कर्तुं सन्देशं प्रेषितवान्।''

तावत् गृहात् बहि: कस्यस्विद् पदरव: श्रुत:। प्रतापसिंह: उत्साहेन अभणत्, ''अकबरस्य सैनिका: एव स्यु: इति चिन्तये।'' अशक्ता कम्पमाना च चम्पावती कथञ्चित् उत्थाय भावावेशेन वक्तुमारभत,''तात, किं



# शेखफरीदः

**पु**रा किल श्रीपतिः नाम एकः भक्तः निवसति स्म। स सर्वाणि शास्त्राणि अधीतवान् आसीत्। स श्रेष्ठः साधुः आसीत्। तस्य भार्यायाः नाम श्यामला। श्यामला पतिव्रता चासीत्। तस्याः आचरणं तथा च गुणान् सर्वे स्तुवन्ति स्म।

भगवतः कृपया सदाचरणयोः तयोः दम्पत्योः एकः पुत्रः अजायत। लौकिकरूपेण तस्य नाम आसीत् शेखफरीदः इति। अतीव प्रेम्णा तस्य लालनं पालनं ताभ्यां कृतम्।

एकस्मिन् दिने देवपूजार्थं पुष्पाणि चेतुं श्रीपतिः वनम् अगच्छत्। तत्र पुष्पाणि चिन्वति सति एकः कृष्णसर्पः तम् अदशत्। श्रीपतिः शीघ्रातिशीघ्रं गृहं प्रत्यागच्छत्, स्नानम् अकरोत् भगवतः ध्याने उपविश्य तुलसीदलम् अभक्षयत्। अनन्तरं पत्नीम् आहूय यत्किमपि अभवत् तत्सर्वम् अकथयत् तथा च ज्ञानोपदेशम् अकरोत्। अनन्तरं वर्षत्रयात्मकम् आत्मजम् अङ्के कृत्वा तस्मै आशीर्वादम् अयच्छत् भगवतः ध्याने मग्नः चाभवत्। 'विधिलिखितं मार्जयितुं को वा समर्थः?' इति विचिन्त्य श्यामला स्वदुःखं निगीर्णवती। सावधानमनसा सा स्वपुत्रस्य पञ्चवर्षाणि यावत् लालनं पालनम् अकरोत्।

शेखफरीदः हरिनामसङ्कीर्तने सहभागं स्व्यकरोत्। एकस्मिन् दिने सः बालभक्तः मातुः समीपम् आगत्य अपृच्छत्-''अम्ब,

---

**वाय्. दक्षिणा मूर्ती**

बादशाहः दयावान् अस्ति इति चिन्तयन्ति भवान्? श्वः सः भवते पदानि अधिकाराणि च उपहारीकुर्यात् किन्तु कालान्तरेण पुनः किङ्करः इव भवता सह व्यवहरेत्। किमयं समाधानविषयः?

तं मदान्धं राजानं वशीकरोतु भवान्। हल्दीघाटीप्रदेशे यैः जनैः उद्घोषणा दत्ता यद् 'प्रतापसिंहस्य पुत्राः सिंहशावकाः सन्ति'। तां घोषणां श्रुत्वा बादशाहस्य अतिपीडा जाता। सः एव प्रतापसिंहः अधुना अधोमुखः भूत्वा बादशाहस्य पुरतः गच्छेत् किम्? राणाप्रतापः ओजस्वीस्वरेण, ''पुत्रि, त्वादृश्याः वीराङ्गनायाः पिता तं नीचपुरुषं शरणं न गच्छेत्। तव पीडां दृष्ट्वा मम मुखात् वचनानि एतानि निर्गतानि। त्वं चिन्तामुक्ता भव। नाहं स्वीकरिष्यामि अकबरस्य दास्यत्वम्'' इति वदन् यावत् चम्पावतीं दृष्टवान् तावदेव तया नेत्रे निमीलिते।

तस्मिन् एव समये बहिस्तात् कश्चन ध्वनिः श्रुतः,''सत्यं सत्यमेवैतद्। वयं अकबरस्य किङ्कराः कदापि न भवेयम्।'' ध्वनिमेनं श्रुत्वा विस्मितेन प्रतापेन दृष्टं यद् सः एव ब्राह्मणः पुनरागतः।

तत्रागत्य सः प्रतापसिंहस्य हस्तं स्वहस्ते धृत्वा चम्पावतीं वीक्ष्य रुदन्नेव सः अभाषत, ''प्रतापसिंह, एतस्याः पवित्रकन्यायाः प्राणदीपः निर्वापितः।

तत्र कारणं तु सः बादशाहः एव वर्तते। अस्याः वीराङ्गनायाः बालिकायाः नाम स्वर्णाक्षरैः अङ्कितं भवेत्। एतस्याः पुरतः भगवन्तं साक्षीकृत्य कथयामि यद् अद्यारभ्य आवयोः शत्रुत्वं समाप्तम्। भवान् भवतः राज्यभारं यथामति वहतु'' एवमुक्त्वा सः ब्राह्मणः प्रतापसिंहं दृढम् आलिङ्गतवान्।





सर्वे जना: नानाप्रकारै: भगवन्तं स्तुवन्ति। परं तस्य दर्शनं किमर्थं न भवति?'' तदा तस्य माता अवदत्-''सत्यं वत्स, ज्येष्ठा: बदन्ति य: तपस्यां करोति स एव भगवत: दर्शनं प्राप्नोति।

तदनन्तरं स: बालभक्त: फरीद: सर्वाणि कार्याणि त्यक्त्वा घोरां तपस्यां कर्तुं वनं प्रस्थित:। प्रियं पुत्रम् एवं गच्छन्तं दृष्ट्वा माता एकां रोटिकां कृत्वा तस्मै दत्तवती। परं सा तस्यां रोटिकायां लवणं न स्थापितवती। स: रोटिकां वस्त्रे बद्ध्वा तद् वस्त्रं कटौ बद्धवान् वनं प्रति प्रस्थितवान् च।

तत्र गत्वा स: घोरां तपस्याम् आरभत। स: अचिन्तयत्, ''यदि बुभुक्षा बाधते तर्हि रोटिका समीपे अस्ति एव तां खादामि। परं तपस्यायां मग्न: स: रोटिकां विस्मृतवान् एव। वृक्षस्य पर्णानि खादित्वा स: क्षुधाशान्तिम् अकरोत्। एवं प्रकारेण नैकानि दिनानि स: कठिनां तपस्याम् अकरोत्। परं तथापि स: भगवत: दर्शनं न लब्धवान्। परं तेन फरीद: निराश: नाभवत्। प्रत्युत अधिकेन उत्साहेन स: कठोरं तप: आचरितवान्। कानिचन दिनानि अतीतानि। कश्चन वणिक् कैश्चित् वस्तुभि: पूर्णं वृषभशकटं गृहीत्वा तत्र अगच्छत्। श्रान्त: स: कञ्चित् समयं यावत् तत्र स्थित:। फरीद: तं कुशलम् अपृच्छत्। स: शकटस्थिता: गोणी: अपश्यत्।

दृष्ट्वा एव तस्य मनसि एका भावना उत्पन्ना 'यदि एता: गोण्य: शर्करायाः अभविष्यन् तर्हि कियत् उत्तमम् अभविष्यत्। अहं मम रोटिकां तया सह अखादिष्यम्।' एवं विचिन्त्य फरीद: शाकटिकम् अपृच्छत्- ''भो: एतासु गोणीषु किम् अस्ति?'' तदा स वणिक् उपहासेन हसन् तम् अवदत्- ''अत्र वालुका: सन्ति। तदनन्तरं स वणिक् स्वगृहं प्रत्यागच्छत्। यदा स: गोणी: उद्घाटितवान् तदा स: तत्र वालुका: एव

अपश्यत्।

बणिक् वक्षताडनम् आरभत्। अनुक्षणं गोणी: शकटे स्थापयित्वा स: फरीदस्य समीपं प्राप्त:। स: साक्षात् तस्य पादयो: अपतत्। ''महात्मन्, मम शर्करया पूरिता: सर्वा: गोण्य: वालुकामया: अभवन्। अहं भवन्तं वञ्चितवान् तस्य योग्य: दण्ड: मया प्राप्त:। कृपया मां क्षम्यताम्।'' एवं स: पुन: पुन: क्षमायाचनाम् करोत्। तत् श्रुत्वा फरीद: अवदत्-''भ्रात:, अहं किमपि न जानामि। मया किमपि न कृतम्। परं वणिक् तत्र न विश्वसितवान्।

तदा फरीद: तं वणिजम् अवदत्, ''अयि भ्रात:, यदि मम वचनेन सत्यमेव तव शर्करा वालुकायां परिवर्तिता तर्हि अहं पुन: वदामि यत् भगवत्कृपया सा पुन: शर्करायां परिवर्तताम्। एवम् उक्ते सति सर्वा: गोण्य: शर्करायां परिवर्तिता:। तत् दृष्ट्वा बणिक् आनन्दस्य पारम् अगच्छत्।

तदनन्तरं शेखदफरीद: पुन: नियमेन कठिनां तपस्याम् आरभत। तथापि भगवत: दर्शनं न लब्धम्। तेन फरीद: अतीव दु:खित:। स: गृहं प्रत्यागत्य मातु: पुरत: रोदनम् आरभत। माता श्यामला सर्वं ज्ञातवती। सा पुत्रस्य केशेषु हस्तं चालयन्ती एकां लघुजटां




कर्षितवती। तद् दृष्ट्वा फरीद: अवदत् ''अम्ब अहं तु पूर्वमेव दु:खित: अस्मि किमर्थं पुन: मां पीडयसि?''

तत् श्रुत्वा माता अवदत्,''पुत्र! यदि लघुजटाया: कर्षणेन त्वम् एतावान् दु:खित: भवसि तर्हि चिन्तय यदा त्वं स्वबुभुक्षां शमयितुं वृक्षात् पर्णानि उदपाटितवान् तदा वृक्षस्य कियत् दु:खं स्यात्। अत: तव तपस्या हिंसायुक्ता अस्ति। तपस्यासमये तव मनसि रोटिका तथा शर्कराया: स्वाद: अपि जागृत:। एवं स्थिते सति कथं वा ईश्वर: त्वयि प्रसन्न: भवेत्। एतत् श्रुत्वैव फरीद: अनुक्षणम् उत्थित:। मातु: उपदेशानुसारं

# कोऽहं भविष्यामि?



'छायचित्रण' व्यवसायक्षेत्रे व्यवसायिकपदवीप्राप्ति: तथा च विविधतापूर्ण: कार्यानुभव: च उभौ अपि यश: प्राप्तये आवश्यकौ। 'फॅशन फोटोग्राफी' विषये कतिपया: अभ्यासक्रमा: भारते नियोजिता: सन्ति। छायाचित्रणविषये औपचारिकं शिक्षणं पोलिटेक्नीक, व्यवसायप्रशिक्षणसंस्था, कलामहाविद्यालय:(B.A visual art or applied art) अथवा fashion संस्था भवितुम् अर्हति।

अधोनिर्दिष्टा: सन्ति काश्चसंस्था: यत्र छायाचित्रण-विषये पदवी अथवा पदविका अभ्यासक्रम: प्रचाल्यन्ते।

- University of Lucknow – www.lkouniv.ac.in/cour_fin_art.htm
- Deendayal Upadhyaya Gorakhpur University, Gorakhpur – www.ddugu.edu.in/courses.htm
- RGSC, Deptt. of Applied Arts, Faculty of Visual arts, BHU, Varanasi – www.bhu.ac.in
- National Institute of Design, Ahmedabad – www.nid.edu
- National Institute of Fashion Technology, Navi Mumbai – www.nift.ac.in
- National Institute of Photography, Mumbai – www.focusnip.com/home_0.html
- Asian academy of film and television, Noida – www.aaft.com

फॅशनफोटोग्राफी विषये अजितेन सह सविस्तरं वार्तालाप: सञ्जात:। प्राप्तेन ज्ञानेन वयम् इतोऽपि अधिकं तद्विषये ज्ञातुं शक्नुम:। अत: छायाचित्रण- विषये येषां रुचि: अस्ति तथा च व्यवसायरूपेण ये अग्रे विषयानुवर्ततं कर्तुम् इच्छन्ति तेभ्य: मम शुभाशया:। - *साई*

निश्चलमनसा तपः आरभत। सः एतावान् निश्चलः जातः यत् तस्य सर्वाः गतयः स्थिराः जाताः। सः ग्रीष्मे अतपत्, वर्षायाम् अक्लिद्यत, शिशिरे अकम्पत। सः शुष्कं काष्ठवत् जातः। तथापि आसनात् विचलितः नाभवत्।

तद् दृष्ट्वा भगवान् प्रत्यक्षः जातः कृपादृष्ट्या पश्यन् अवदत् ''वत्स! इदानीं त्वं गृहं गच्छ। सर्वान् गुरून् आश्रित्य तेषाम् अनुग्रहं प्राप्नुहि। अहं सर्वदा तव समीपे भवामि'' एवमुक्त्वा भगवान् अन्तर्हितः।

शेखफरीदः अनुक्षणं गृहं प्रत्यागच्छत्। यत् किमपि अभवत् तत् सर्वं मात्रे अश्रावयत्। माता अतीव सन्तुष्टा अभवत्। तदनन्तरं शेखफरीदः गृहात् निष्क्रम्य, द्वारकादि तीर्थक्षेत्राणि गत्वा भगवतः भक्तैः मिलित्वा गृहम् अगच्छत्, मात्रा सह सुखेन न्यवसत्।

एकस्मिन् दिने तस्य देशस्य नृपः तस्य गृहम् आगच्छत्। पूर्वजन्मनः दुष्कृत्यस्य फलस्वरूपम् इत्यतः केनचित् रोगेण ग्रस्तः सः। तं रोगं दूरीकरोतु इति प्रार्थयत नृपः। फरीदः तं हस्तेन आपादमस्तकम् अस्पृशत् तेन अनुक्षणं सः निरामयः जातः।

अतः नृपतिः धनवस्त्रादिना तं सत्कर्तुम् ऐच्छत्। सः फरीदम् अगदत्-''यदि भवान् अस्य स्वीकारं नैव करिष्यति तर्हि अहम् अत्रैव प्राणत्यागं करोमि।'' तस्यामेव रात्रौ भगवान् पाण्डुरङ्गः स्वप्ने तस्मै दर्शनम् अयच्छत्। सः आज्ञापयत् यत् 'नृपः यां धनसम्पत्तिं यच्छन् अस्ति तां स्वीकुरु तथा च तां भगवतः भक्तानां सेवायाम् उपयुङ्क्ष्व' इति।



# चन्दमामीया सामान्यज्ञानपरीक्षा - ३२

*(ऊनषोडशवर्षीयाणां कृते)*

***Co-sponsored by FOUNDATION, Bangalore***

**समुचितोत्तरदाता अर्हति ₹२५०/- पारितोषिकत्वेन***

***एकाधिकजना: यदि शुद्धम् उत्तरं प्रेषयेयु:, तर्हि प्रतिजनं ₹५०/- दास्यन्ते पारितोषिकत्वेन।**

**अधोक्तं क्रियतां भवद्भि:-**

१. उत्तराणि समपत्रे लेखनीयानि।

२. नाम, वय: सङ्केत: (पिन् कोड्सहित:) प्रेषणीय:।

३. पिहितपत्रे **चन्दमामीया सामान्यज्ञानपरीक्षा - ३२** इति लेखनीयम्।

४. ३१ अक्टूबर पूर्वं भवदुत्तराणि अस्माभि: प्राप्तानि भवेयु: तथा तानि प्रेषणीयानि।

५. २०११ तमवर्षस्य दिसम्बरमासीये अङ्के परिणाम: प्रकाशयिष्यते।

## पर्यटनविषये सर्वम्



१) 'जागतिकपर्यटदिनं' कदा आचर्यते?

२) 'माचु पिचु' इति नगर्या: अवशेषा: कस्मिन् देशे सन्ति?

३) भारतदेशस्य कस्मिन् राज्ये 'बुलाक्' सर: अस्ति?

४) १४९१ तमे वर्षे हैद्राबाद इत्यत्र जातस्य 'प्लेग' रोगस्य अवसानस्य स्मरणार्थं कस्य प्रसिद्धस्य भवनस्य निर्माणं जातम्?

५) 'कलंगूट' समुद्रतट: कुत्र वर्तते?

६) भारतस्य किं राज्यं 'भगवत: स्वीयं राज्यम्' इति गण्यते?

७) भारतस्य का नगरी 'पाटलनगरी' (Pink City) इति विख्याता?

८) उत्तराखण्डे 'पर्वतराज्ञी' इति किं पर्वतीयप्रदेशस्य नाम प्रसिद्धम्?

## चन्दमामीया सामान्यज्ञानपरीक्षा - २९ जून २०११ उत्तरम्

१) शिराबिन्दव:। २) स्नायुसन्देशा: संज्ञासंदेशा: च। ३) मस्तिष्कम्।
४) १० खर्वशिराकोषा:। ५) मेनिंजेस्। ६) लघुमस्तिष्कम्, बृहत्मस्तिष्कम्, मस्तिष्कदण्ड:।
७) मस्तिष्कम्।

***जून'११ मासस्य सामान्यज्ञानपरीक्षाया: विजेतृपदं न केनापि प्राप्तम्।***



# हस्यताम् उदरोपपीडम्



*माता* - रणजीत! मया दत्तं धनं त्वं किमर्थं गलितवान्?
*रणजीत* - अम्ब, किन्तु त्वयैवोक्तं खलु एतद् मम भोजनधनम् इति।



*शिक्षिका:* - यदि मम एकस्मिन् हस्ते सप्त सेबफलानि स्यु: अन्यस्मिन् हस्ते च अष्टफलानि तर्हि किं तस्य तात्पर्यम्।
*रोहन:* - भवत्या: हस्तौ अतीव विशालौ।



एक: प्रवासी एक: विमानचालक: च, आकाशे विमानयानेन प्रवासं कुर्वन्तौ आस्ताम्। अकस्मात् स: विमानचालक: उन्मत्त: इव हसितुम् आरब्धवान्।
*प्रवासी* - किमर्थम् एवम् अट्टहास:?
*विमानचालक:* - मनोरूग्णालये यदा अहं पलायित: इति वैद्या: अवगच्छन्ति तदा तेषां का अवस्था स्यात् इति विचारेण हासं निरोद्धुं न शक्नोमि।



*रक्षणा* - सा अवदत् यत्, मया तुभ्यं 'न कथनीयमिति' उक्त्वा यदुक्तं तद् त्वं ताम् अवद: इति।
*वन्दना* - किन्तु त्वं न वक्तव्या इति मया उक्तम् आसीत् तस्यै।
*रक्षणा* - अस्तु, अधुना अहं त्वाम् अवदम् इति ताम् न वदतु।



*सुन्दर:* - तव अङ्गुल्याम् इदं सूत्रं किमर्थं बद्धा?
*राजु:* - मात्रालिखितस्य पत्रस्य प्रेषणस्य स्मरणार्थ मात्रा तद् बद्धम्।
*सुन्दर:* - तदा अन्यस्यामपि अङ्गुल्यां पुन: किमर्थं द्वितीयं सूत्रम्?
*राजु:* - तद् पत्रं विमानसेवाद्वाराप्रेषणस्य स्मरणार्थम्।



'राशिपूप:' इति विवाहस्य विशिष्ट: पूप: भवति। नूतनदम्पत्यो: परिवारसदस्या: मित्राणि च प्रत्येकं पूपस्य एकैकम् स्तरमानीय मध्ये सेबनवनीतं च संयोज्य परस्परोपरि स्थापयित्वा राशिनिर्माणं कुर्वन्ति स्म। यावान् महान् राशि: भवेत् तावत् दम्पती प्रसिद्धौ इति चिन्तयन्ति स्म।



१८ शतकस्य आरम्भे फलपूपा: सर्वथा निषिद्धा: आसन् यत: ते 'पापेन महार्घा:' भवन्ति। परं पुन: १९ शतके ते प्रसिद्धा: जाता:। इंग्लण्डदेशे एवं परम्परा अस्ति यत् अविवाहित-अतिथि: उपधानस्य अध: फलपूपस्य किञ्चित् भागं स्थापयन्ति येन अतिथि: स्वसहचरस्य स्वप्नं पश्येत्। 'मधुर-स्वप्नानि' शब्दश: भवेयु:।



धान्यसङ्कलनपर्वणि सेल्विकजना: महत: 'बाब्का' पूपस्य निर्माणं पारम्पारिकरीत्या कुर्वन्ति स्म। ननु ज्ञातुम् अर्ह: अस्ति खलु अयं विषय:। पाचका: एतस्य पिष्टकं वर्तिकानां पक्षेषु निक्षिप्य अनन्तरं चुल्यां पाचयन्ति। पुरुषाणां पाकगृहस्य अन्त: प्रवेश: न अनुमत: आसीत्। तथा च केनापि एकस्यापि अक्षरस्योच्चारणं न क्रियते पाकसिद्धिसमये।



'लॅमिङ्गटन्स' (चार्ल्स-द्वितीय-बॅरन लॅमिङ्गटन आख्यया) पूपा: ऑस्ट्रेलिया-न्यूझीलण्डदेशयो: प्रसिद्धा: त्वरितपूर्वसूचनायां सत्यां निर्मिता: एते पूपा: लॅमिङ्गटन इत्यस्य अतिथिभि: बहु स्तुता:। परं चिन्तयन्तु किम्? लॅमिङ्गटन: स्वनाम्ना मिष्टान्नम् आख्यायितम् इति न इष्टवान् आसीत्।



कदाचित् काचित् महिला 'रक्तवेल्वेटपूपं' (कस्मिश्चित् अल्पाहारगृहे खादितम्) तावत् इष्टवती यत् सा तस्य पाककृतिम् एव प्रार्थितवती। सा वज्रताडिता जाता यदा तन्निमित्तं तया १०० इति मूल्यं दातव्यम् अभवत्। क्रोधाविष्टा सा प्रतिकारार्थं पूपस्य पाककृतिं शृङ्खलापत्रद्वारा सहस्रेभ्य: जनेभ्य: प्रेषितवती।

# पूपं स्वीकरोतु खादतु च





प्राक्तनवर्षेषु पूपा: अपूर्वपरम्परायाः भागाः आसन्। केल्टिकजनानां कृते, बेल्ताने-पर्व ग्रीष्मस्य आरम्भं द्योतयति। जयसूचक-अग्नेः पर्वतोपरि ज्वालनं तथा गोलपूपानां पर्वतात् अधोलोठनम् इति सूर्यमालायाः परिवर्तनस्यैव द्योतकम् भवति स्म। यदि सोलपूपः अविकलः तिष्ठेत् तर्हि अग्रे उत्तमभाग्यम् अस्ति इति मन्यते स्म।



चायनादेशीयाः अमरतायाः देवतां हेङ्गओ एनां सत्कर्तुं चन्द्रपूपानां निर्माणं कुर्वन्ति स्म। मङ्गोलियन-शासकानां ध्वंसार्थं मिंगक्रांतिकारकाः किंवदन्तीं प्रसारितवन्तः यत्-महती महामारी प्रसरन्ती अस्ति यस्याः अवरोधनं केवलं चन्द्रपूपानां भक्षणेन एव शक्यम् अस्ति। गुप्तसूचनाः पूपानां तले न्यस्ताः आसन् याभिः एकत्रीकृत्य पठनेन काचित् प्रहेलिका स्पष्टा भवेत्।



दाधजपूपः कतिवर्षेभ्यः पूर्वमासीत् इति युष्माकं कल्पना? एवं कथ्यते यत् बहुपूर्वम् ७७६ ख्रि.पू. तमे प्रथमायां ऑलिम्पिकस्पर्धायां, ग्रीसदेशे सर्वेभ्यः प्रतिस्पर्धिभ्यः दाधजपूपः वितीर्यते स्म। ग्रीकतः अनन्तरं सः पूपः रोमनजनैः अनन्तरं च अवशिष्टयुरोपजनैः अमेरिकादेशेन च ज्ञातः।



पूपस्योपरि सिक्थवर्तिकानां प्रस्थापनं 'किन्डरफेस्ट' इति नाम्न्याः जर्मनपरम्परायां १५ शतके आरब्धम्। बालस्य जन्मदिनम् अतीव महत्त्वपूर्णं इति कृत्वा बालस्य परिवारः मित्राणि च पूपं परितः प्रज्वालितसिक्थवर्तिकाः सायङ्कालपर्यन्तं संरक्ष्य सर्वे पूपं खादन्ति स्म।




'व्हुपीपाईज्' इति पूपाः मध्ये एव नीहारक्षीरजस्य स्तरं स्थापयित्वा निर्माप्यन्ते स्म। तेषां तथा नामाभिधानं कथं जातम्? एवं कथयन्ति यत् अमिशमहिला एतेषां निर्माणं कृत्वा कृषकाणां भोजनपात्रेषु विशेषखाद्यरुपेण न्यस्तवती। यदा कृषकैः भोजनपात्राणि उद्घाटितानि तदा आनन्देन ते 'व्हुपी' इति आक्रोशम् अकर्वन्।



# वर्ध्यताम् शब्दसम्पत्तिः

कति भारतीयाः भाषाः ज्ञायन्ते भवद्भिः ? अधुना चन्दमामा-साहाय्येन भारतीयाः भाषाः पठित्वा कामं भारतभ्रमणं क्रियताम् । अधस्तनं शब्दपटं दृष्ट्वा स्वभाषायां वाक्यं पठन्तु। अनन्तरं निर्देशानुसारं तदेव वाक्यम् अन्यासु भाषासु कथं वक्तव्यम् इति अवगच्छन्तु ।





| English | What you say is true. | It didn't occur to me at that time. |
|---|---|---|
| Sanskrit | त्वया यदुक्तं तद् सत्यमेव। | तस्मिन् समये तथा न अभासत। |
| Telugu | మీరు చెప్పింది నిజం.<br>मीरुछेप्पिन्दि निजम्. | ఆ సమయంలో నాకు అలా జరగలేదు.<br>आ समयम्लो नाकु अला जरगलेदु. |
| Tamil | நீ சொல்வது உண்மை.<br>नी सोल्वधु उन्मै. | எனக்கு அப்போது தோன்றவில்லை.<br>एनकु अप्पोधु थोन्रविलै. |
| Bengali | আপনি যা বলছেন তা সত্য।<br>आपनि जा बोलछ्हेन था सोत्यो. | তখন এটা আমার মাথায় আসেনি।<br>थखोन ऐीं आमार माथ्हाय आसेनि. |
| Marathi | तुम्ही सांगताय ते खरं आहे.<br>तुम्ही सांगताय ते खरं आहे. | त्यावेळी मला ते सुचलं नव्हतं.<br>मला त्यावेळी ते सुचल नव्हत. |
| Kannada | ನೀವು ಹೇಳಿದ್ದು ನಿಜ.<br>नीवु हेलिद्दु निजा. | ಆ ಸಮಯದಲ್ಲಿ ನನಗೆ ಹಾಗೆ ಆಗಿರಲಿಲ್ಲ.<br>आ समयदल्लि ननगे हागे आगिरलिल्ल. |
| Oriya | ତୁମେ ଯାହା କହୁଛ ସତ।<br>तुमे याहा कहुछ्ह सत. | ସେଥର ମୋ ସହିତ ଏମିତି କିଛି ଘଟି ନଥିଲା।<br>सेथर मो सहित एमिति किछ्हि घतिनथिल. |
| Gujarati | તમે જે કહ્યું તે સાચું છે.<br>तमे जे कह्यु ते साचु छे. | તે સમયે તે મારી સામે આવ્યું નહોતું.<br>ते समये ते मारी सामे आव्यु नहोतु. |
| Assamese | তুমি যি কোৱা সেইটো শুদ্ধ।<br>तुमि जि कुवा क्षेइतु सुद्ध. | সেই সময়ত কথাটো মই ভৱাই নাছিলো ।<br>क्षेइ क्षोमोयोत कथतु मोइ भवै नछिलु. |
| Malayalam | നിങ്ങൾ പറയുന്നത് ശരിയാണ്.<br>निन्गल परयुन्नथु सरियनु. | ആ സമയത്ത് എനിക്കത് സംഭവിച്ചില്ല.<br>आ समयथु एनिकथु सम्भविछिल. |
| Santali | [illegible]<br>अमग मजू सरे गेव. | [illegible]<br>उन झोग दो नोव बय छिक इन्ज. |
| Hindi | तुमने जो कहा, सच है।<br>तुमने जो कहा, सच है। | मुझे उस समय यह नहीं सूझा था।<br>मुझे उस समय यह नहीं सूझा था। |

किं भवन्त: जानन्ति यत् तेलुगु इति श्रुतिमधुरशब्दानां भाषा विद्यते। पौर्वात्यप्रदेशानाम् इयं इटालियनभाषा इति कथ्यते। तेलुगुभाषाया: सर्वे शब्दा: स्वरान्ता: भवन्ति। उदा.तेलुगु-ग+उ; इल्लु(गृहम्)-इल्ल+उ; थीस्को( क्रय:/विक्रय:)-क+ओ; रा(आगच्छ)(आ)..किं न मनोरञ्जकम् एतद्। चन्दमामा(आ) इति शब्द: अपि स्वरान्त: एव!





| English | Why worry so much? | What is your problem ? |
|---|---|---|
| Sanskrit | किमर्थम् एतावती चिन्ता? | का तव समस्या? |
| Telugu | ఎందుకంత ఆందోళన పడుతున్నారు?<br>एन्दुकन्थ आन्दोलन पडुथुन्नरु? | మీ సమస్య ఏమిటి?<br>मी समस्य एमिटि? |
| Tamil | ஏன் இத்தனை கவலை?<br>अएन इथ्थने कवले? | உன்னுடைய பிரச்சினை என்ன?<br>उन्नुदैअ प्रछ्छने ए़ु? |
| Bengali | এত চিন্তা করছেন কেন?<br>ऐ छिथा कोरछ्हेन केनो? | আপনার অসুবিধাটা কী?<br>अआप्नार असुविद्धाता की? |
| Marathi | इतकी काळजी का ?<br>इतकी काळाजी का? | तुझी समस्या काय आहे?<br>तुझी समस्या काय आहे? |
| Kannada | ಇದಕ್ಕೆ ಯಾಕೆ ಇಷ್ಟು ಚಿಂತೆ?<br>इदके याके इस्तु छिन्तें? | ನಿಮ್ಮ ಸಮಸ್ಯೆ ಏನು?<br>निम्म अमस्ये येनु? |
| Oriya | କାହିଁକି ଏତେ ବ୍ୟସ୍ତ ହେଉଛ?<br>काहिन्कि एते ब्यस्त हेउछ्ह? | ତୁମର କଣ ଅସୁବିଧା ଅଛି?<br>तुमर कन अशुबिध अछ्हि? |
| Gujarati | આટલી ચિંતા કેમ કરો છો?<br>आटळी चिंता केम करो छो. | તમારી સમસ્યા શું છે?<br>तमारी समस्या शु छे. |
| Assamese | কিয় ইমান চিন্তা কৰা?<br>कियो इमन छिन्त कोर? | তোমাৰ সমস্যাটো কি?<br>तुमर क्षमश्यतु कि? |
| Malayalam | എന്തിനാണ് ഇത്രയധികം ആശങ്കപ്പെടുന്നത്?<br>एन्थिननु थ्रयधिकम आसनकाप्पेदुन्नथु? | എന്താണ് നിങ്ങളുടെ പ്രശ്നം?<br>एन्थनु निगलुदे प्रस्नम? |
| Santali | ᱪᱮᱫᱟᱜ ᱩᱱᱟᱜ ᱫᱩᱠ ᱫᱚ?<br>छेदग उनग दुक दो? | ᱟᱢᱟᱜ ᱮᱴᱠᱮᱴᱚᱬᱮ ᱪᱮᱫ?<br>अमग एत्केतोने छेद? |
| Hindi | इतनी चिन्ता क्यों कर रहे हो?<br>इतनी चिंता क्यो कर रहे हो? | तुम्हारी समस्या क्या है?<br>तुम्हारी समस्या क्या है? |

# मुखपृष्ठ-कथा

## दिव्यत्वं प्रकटीभूतम्

१९८० तमे वर्षे अस्माकं ज्येष्ठकलाकृता श्रीमता वपामहोदयेन इदं चित्रम् आलिखितम्। गणेश-जन्मोत्सवसन्दर्भे तस्य मुखपृष्ठरूपेण पुनर्प्रकाशनं सयुक्तिकं मतम् अस्माभिः।

अस्मिन् चित्रे विशालः विश्वरूपधारी पञ्चमुखः भगवान् गणेशः चित्रितः। ब्रह्मा गणेशरूपस्य तात्पर्यं वदन् ऐरावतस्य भ्राता गजेन्द्रः तथा देवन्द्रः इत्यनयोः कलहवार्ताकथनम् आरब्धवान्। तदा गजेन्द्रः उच्चचार यत् ''नूनं स कालः समुपस्थास्यति यदा इन्द्रः मत्पुरतः शिरः अवनमयेत्'' इति। गजमुखधारी गणेशः यदा विश्वरूपं धृतवान् तदा इन्द्रः तं नमस्करोति। पश्चात्तापेन इन्द्रः हस्ताभ्यां कर्णौ गृहीत्वा गजेन्द्रस्य अपमानविषये खेदं प्रकटितवान्।

अनन्तरं ब्रह्मा विघ्नेश्वरः एव कथं सृष्टिनिर्माता इति विस्तरेण स्पष्टीकरोति। गणेशः स्वयं पञ्चगणानाम् अथवा 'पृथिवी, आप्, तेजः वायुः, आकाशः चेति पञ्चतत्त्वानां मेलः अत एव 'महागणपतिः' इति विख्यातः। गणपतेः गजमुखं विशाला मूर्तिः च मानसिकीं शारीरिकीं च शक्तिं द्योतयति। तथापि लघुमूषकवाहनेन सः सर्वत्र प्रवासं करोति एतदपि विलक्षणम्। गजमुखस्य लघुनी नेत्रे परन्तु सूक्ष्मेक्षिका इव सर्वं सूक्ष्मं वस्तुजातं द्रष्टुं समर्थे। तस्य दीर्घौ कर्णौ जगति सर्वत्र विकीर्णैः भक्तैः कुतश्चिदपि कृताम् आर्तां प्रार्थनाम् आकर्णयितुं समर्थौ। तथैव दीर्घशुण्डा दूरे स्थितं सर्वमपि स्ववशं कर्तुं समर्था। एवं सः सर्वैश्वर्यस्य स्वामी। यत्किमपि कर्तुं प्रक्रमता मनुष्येण आदौ विघ्नहर्ता पूजनीयः।

भाद्रपदमासे एव विघ्नेश्वरः आविरभवत्। अतः भाद्रपदमासस्य शुक्लपक्षे चतुर्थ्यां ये विनायकं भजन्ति, ते वाञ्छितं फलं लभन्ते। कार्यपथे बाधां जनयन्ति विघ्नानि दूरीकर्तुं ते धैर्यं शक्तिं च प्राप्नुवन्ति।

इदं मुखपृष्ठं तत्सम्बन्धिनी कथा च भवतां मोदाय कल्पिता स्यात् इति वयम् आशास्महे। अग्रिमे मासे अपि मुखपृष्ठे अपरां चन्दमामा-कलाकृतिं द्रक्ष्यन्ति भवन्तः।

# भारतदर्शनम्



## चञ्चायते कूष्माण्डम्

यदि भवन्तः तमिळनाडुराज्यं गच्छेयुः तर्हि तत्र सर्वेषां नूतनगृहाणां पुरतः एकं दानवमुखं पश्येयुः। तत् भयजनकं भवति प्रायः। किन्तु तदस्ति कूष्माण्डस्य उपरि चित्रितम्। एतद्राज्यीयाः जनाः महतः श्वेतकूष्माण्डस्य उपरि तादृशं मुखं चित्रयित्वा नूतनगृहस्य पुरतः उत्तोलयन्ति। दुष्टदृष्टेः निवारणार्थम् एवं क्रियते तैः। नूतनस्य वाहनस्य प्रारम्भपूजावसरे अपि श्वेतकूष्माण्डस्य भञ्जनं क्रियते। नूतन-कार्यारम्भावसरे अपि एवं क्रियते। अमावास्यादिषु प्रतिमासिकेषु अवसरेषु अपि एवं क्रियते क्वचित्।

## आराध्यः, उत दूष्यः?

महाभारतीयायां कथायां प्रस्तुतं कौरवाणां नायकं दुर्योधनं कीदृशं वदन्ति भवन्तः? पाण्डवेभ्यः सः सदा असूयति स्म इति खलु? सः अतिमहत्त्वाकांक्षी आसीत्, महादुष्टः च आसीत् इति तु वदेयुः एव। किन्तु उत्तरकाश्याः जमुनाखातस्य पश्चिमभागे वसन्तः केचन जनाः भवताम् एतत् मतं सर्वथा न अङ्गीकुर्वन्ति। यतः दुर्योधनः अस्ति तेषाम् आराध्यदेवः। प्रतिदिनं ते तं भक्त्या पूजयन्ति!!



प्रत्युत्पन्नमतिः



वीरबलः

# वास्तविकः अपराधी



१. एकदा कस्यचित् धनिकस्य वणिजः धनस्यूतः नष्टः। तस्य गृहे षट् भृत्याः आसन्। तेषु एव एकः चोरः स्यात् इति तस्य मतम्।



२. अपराधिनं ग्रहीतुं सः वीरबलस्य साहाय्यं स्वीकृतवान्। "मित्र! अद्य सायङ्काले तव सर्वान् भृत्यान् मम गृहे प्रेषय" इति अवदत् वीरबलः।



३. यथानिश्चितं सर्वे वीरबलस्य गृहम् आगताः। तेन पूर्वमेव सर्वेषां कृते समानोन्नतयः यष्टिकाः सिद्धाः कृताः आसन्।



४. "पश्यन्तु, एताः मायायष्टिकाः। एकैकां यष्टिकां स्वीकृत्य गृहं गत्वा निद्रां कर्तुम् अर्हन्ति।"



५. "परन्तु एताः मायायष्टिकाः इति स्मरन्तु। येन केनापि स्यूतः चोरितः स्यात् तस्य यष्टिका अङ्गुलिमात्रं दीर्घा भविष्यति।"



६. सर्वे भृत्या: सुखेन सुप्ता: ऋते एकस्मात् भृत्यात्। "श्व: प्रात: मम चौर्यं प्रकटितं भवेत्। अहं मम यष्टिकां ह्रस्वीकरोमि।"



७. तदा एव स: स्वस्य यष्टिकां लघूकृतवान्। तथा कृत्वा एव स: सुखेन सुप्त:।



८. अन्येद्यु: बीरबल: अवदत्," वस्तुत: मया प्रमाद: कृत:। चौरस्य यष्टिका ह्रस्वा भविष्यति इति मया वक्तव्यम् आसीत्।"



९. अपराधी अनुक्षणं बीरबलस्य पादयो: पतित्वा स्वस्य अपराधम् अङ्गीकृतवान्," हुजुर! क्षम्यताम्। बीरबल: अनन्तरं तं वणिजे प्रदत्तवान्।



## गणनक्रीडा

अत्र केचन पक्षिण: सन्ति। सम्यक् निरीक्ष्य पक्षिणां गणनां कृत्वा रिक्ते चतुष्कोणे संख्यां पूरयतु।



# चित्रमञ्जूषा

अस्मिन् मासे जगतः सप्तभ्यः नूतन-आश्चर्यवस्तुभ्यः कानिचन आधारीकृत्य चित्रपुस्तिकानिर्माणं कुर्मः



ग्रेट वॉल ऑफ् चायना, चीनदेशः



माचु पिच्छु, पेरुदेशः



कलोसियम्, इट्लीदेशः



ग्रेट पिरॅमिड ऑफ् गीजा, इजिप्तदेशः



क्राइस्ट द रिडीमर, ब्राझिलदेशः



चिचेन इत्झा, मेक्सिकोदेशः

CHANDAMAMA (Sanskrit) September 2011 Registrar of Newspapers of India No. MAHSAN/2010/35902
Licensed to post regd. No. MH/MR/N/133/MBI/10-12